त्योत्सर्गिकष्ठक् तच धनुषष्ठक् दसुसुक्तान्तात्कः ततः सेनाकृत्वा त्कृतैकवद्भावः तेनान्वितावनुगतौ ॥ ४० ॥

तावित्यादि। ततोवचनानन्तरं तौ खरदूषणौ निर्ययतुः निर्गतौ चतुर्द्दश सहस्राणि परिमाणमस्य चतुर्द्दशसहस्रं विका रसंघेत्यादिना तदस्य परिमाणमित्यर्थे ण्णः सुपञ्चाशादित्वा त्परपदे वृद्धिः चतुर्द्दशसाहस्रं बलं ययोः तौ तथा परश्वधैः प रशुभिर्युध्यन्ते पारश्वधिका. धनुर्भिर्युध्यन्ते धानुष्काः शक्तिभिर्यु ध्यन्ते शाक्तीकाः प्रास्यन्ति तमिति प्रासोलगुडः कर्म्मणि घञ् प्रा सैर्युध्यन्ते प्रासिकाः एभिरन्वितौ अनुगतौ ढघेकादिति ष्णिक कण्ष्णीकाः ॥ ४० ॥

अथ सम्पततोभीमान् विशिखैरामलक्ष्मणौ। वज्र मूर्द्धोद्विमूर्द्धांश्च त्रिमूर्द्धांश्चाहतां मृधे ॥ ४१ ॥

अथा। अथैतस्मिन्प्रस्तावे रामलक्ष्मणौ मृधे संग्रामे विशिखैः शरैरहतां हतवन्तौ हन्तिः परस्मैपदी तस्माल्लङि तसस्ताम् तस्य ङित्वे अनुदात्तेत्यादिना अनुनासिकलोपः कान् राक्षसान् विशेषणोपादानात् विशेष्यप्रतिपत्तिः प्रकृतत्वाद्वा सम्पततोऽभि पततः वज्रमूर्द्धोवज्रशिरसः तथा द्विमूर्द्धांस्त्रिमूर्द्धांश्च द्वित्रिभ्यां षमूर्द्धइति समासान्तः षः अतएव भीमान् भयानकान् त्रिमू र्द्धांश्चेत्यत्र नन्छव्यप्रशानिति रुः पूर्व्वस्य त्वनुनासिकः विसर्जनीय स्य सः सुत्वम् ॥ ४१ ॥

अथेत्यादि। निर्गमानन्तरं सम्पततः सङ्गच्छतः संमुखमागच्छ तो राक्षसान् अर्थात् रामलक्ष्मणौ मृधे युद्धे विशिखैर्बाणैरा

स्तां वनतनायनिमामिति नस्य लोपः बहुमूर्द्धा बहुमस्तकान् एवं दिमूर्द्धान् त्रिमूर्द्धान् द्विचेमूर्द्ध इति षः श्वोर्लोपेताविति नस्य लोपः बहुशब्दो विपुलार्थस्तत्वादि संख्यार्थकोवा अतएव भीमान् भयङ्करान्॥ ४१॥

तैर्वृक्णरुग्नसंभुग्नचुसभिन्नविपन्नकैः। निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी॥ ४२॥

तर्ह। तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरण इत्यस्मात्कर्मणि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः सम्भुग्नैः वक्रीकृतदेहैः चुसैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पायां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संह्रीणैर्लज्जितैः वयमपीदृशीन्दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवम्भाषमाणैः तत्र ह्रश्चिहजिभुजिमस्जिविजिभ्योनिष्ठायामोदितश्चेति नत्वम् चोःकुरिति कुः चुदिभिदिपदिभ्योरदाभ्यामिति दस्य च नः संह्रीणइति नुदविदेत्यादिना ह्रीङ्चये इत्यस्य स्वादयओदित इत्योदितश्चेति नत्वम्॥ ४२॥

तैरित्यादि। तैराक्षसैर्मेदिनी पप्रे परिता पृलिपूर्त्तौ कर्मणि ठो कीदृशैः वृक्णैः छिन्नैः वृस्चैः ओव्रश्चेति कस्य नत्वं कश्च चस्य कत्वे तन्निमित्तस्य शस्य षत्वे स्वादेः षोलोपः षत्वस्य लोपोरिति जिः रुग्नैर्भग्नहस्तपादैः रुजोभङ्गे ओदित्वात् स्वाद्योरिति कस्य नः जस्य गत्वविधानं मग्नस्य दोर्भिर्भुजनस्य भारमित्यत्र व्याख्यातं संभुग्नैर्वक्रीकृतैः भुजोभोवक्रत्वे पूर्ववत् चुसैः संपिष्टदेहैः चुदिरसंपेषणे

ह्रान्तत्वात् स्त्वाद्योरिति क्तस्य दस्य च नः पूर्वोऽदान्तेत्यादिना पूर्व्वस्य णत्वे ष्टुभिरिति परस्य नस्य णत्वं भिन्नैर्विदारितैः विपन्नैर्मृतैः विपूर्व्वपदिर्मरणे वर्त्तते स्वार्थे कृत्वायां वा कः निमग्नैर्भीत्या गुप्तैः रुधिरप्रवाहे मग्नैर्व्वा उद्विग्नैर्भीतैः ओविजीभयचलनयोः संकीर्णैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीलिलज्जायां ह्रीघ्राघ्रौन्देति क्तस्य नः दीनैः सुतादिदुःखान्वितैः ओदीङ्क्षये ॥ ४१ ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमं। सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥

केचित्। तेषाम्मध्ये केचित् वेपथुं कम्पम् टुवेपृकम्पने आसेदुः प्राप्ताः अन्ये दवथुमुपतापमुत्तममत्युक्तं टुदुउपतापे केचिद्वमथुञ्छर्दनं सरक्तं सशोणितं टुवमुउद्गिरणे भ्राजथुं शोभां नैव केचन न केचिदपि टुभ्राजृदीप्तौ सर्व्वत्र द्वितोऽथुच् ॥ ४३ ॥

केचिदित्यादि। तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पं आसेदुः प्रापुः वपट्टुङ्चलने अन्ये दवथुं उपतापं उत्तमं महान्तं आसेदुः टुदुउपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवमउद्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ्दीप्तौ सर्व्वत्र द्वितोऽथुर्भावे इति अथुः ॥ ४३ ॥

मृगयुमिव मृगोऽथ दक्षिणोर्म्मा द्विपमिव दावहतीं मरावुदन्यन्। रघुतनयमुपाययौ त्रिमूर्द्धा विषभृदिवोग्रमुखं पतत्त्रिराजं ॥ ४४ ॥

मृग। अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशि रानाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्ध कमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्य यान्तः दक्षिणेर्मा दक्षिणे ईर्म्म व्रणं यस्येति दक्षिणेर्म्मा लुब्धयो गदृत्यनिच् यथा मृगोलुब्धकव्रणितदक्षिणाङ्गः तमेव मरणा योपयाति दिशमिव दाहवतीं यथा दिशन्दावाग्नियुतामरौ नि र्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमि च्छति सुप आत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादि ना निपातितम् तदन्ताल्लट् शतृप्रत्ययः विषभृदिव यथा विष धरः सर्प उग्रमुखभीषणमुखम्पतत्रिराजं गरुडमुपयाति तद न्तमिति राजाहःसखिभ्यष्टच्॥ ४४॥

मृगयुमित्यादि। अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरानाम राक्षसो रघुतनयं रामं उपाययौ उपागतः यथा दक्षिणेर्मा व्या धेन व्रणितदक्षिणाङ्गोमृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्गे ईर्म्म व्याधघातव्रणं यस्य स दक्षिणेर्म्मा दक्षिणादीर्मादन् व्याधव्रणितदक्षिणाङ्गे मृगेदति पर सूत्रं लभते ईर्मन् शब्दोऽप्यस्ति किम्वा दक्षिणे ईर्म्म व्रणं यस्येति धर्म्मादनित्यस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् व्रणो ऽस्त्रियामीर्म्ममरुरित्यमरः यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशं उपयाति उदकं पातुमिच्छती ति धनोदकाशनेति क्ये उनङ् शतृः यथा वा विषभृत् सर्प उग्रमु खं भीषणवदनं पतत्रिराजं गरुडं उपयाति॥ ४४॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः। भयमुपनिदधे स राक्षसानामखिलकुलक्षयपूर्व्वलिङ्गतुल्यः ॥ ४५ ॥

इति भट्टिकाव्ये चतुर्थः सर्गः॥

शित। त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य सः क्षितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गानि यस्य क्षितिभृतः अखिलस्य सर्व्वस्य कुलस्य क्षये विनाशे यत् पूर्व्वं लिङ्गन्तेन तुल्यः असावप्यखिलराक्षसक्षयस्य पूर्व्वलिङ्गतुल्यः ॥ ४५ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामप्रवासश्चतुर्थः सर्गः॥ ४ ॥

शितेत्यादि। शितविशिखैस्तीक्ष्णबाणैर्निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् क्षितिभृदिव पर्व्वत इव क्षितिकम्पात् कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स तथा त्रिमूर्द्धः किम्भूतः अखिलकुलक्षयपूर्व्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत्पूर्व्वलिङ्गं पूर्व्वचिह्नं भाविक्षयसूचक उत्पातस्तत्तुल्यः केचित्तु अखिलकुलस्य क्षये पूर्व्वलिङ्गं आदिचिह्नं त्रिमूर्द्धस्तादृशः पर्व्वत इत्याहुः ॥ ४५ ॥

इति मद्द्यगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धवधो नाम चतुर्थः सर्गः॥ ४ ॥

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितोरणं। उत्प
तिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ १ ॥

निरा। खरदूषणौ रणम्परितः समन्तात् अभित इत्यादि
ना द्वितीया चेरतुः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ
वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया
महाप्राणोद्भावनशीलौ उत्पतिष्णू नभउत्पतनशीलौ सहिष्णू
शस्त्रप्रहारसहनशीलौ सर्व्वत्रालङ्कृषीत्यादिना इष्णुच् ॥ १ ।

निराकरिष्णू इत्यादि। खरदूषणौ रणं परितः सर्व्वतश्चेरतुः
चरगत्यां ठी धिक्समयेति परितोयोगे द्वितीया निराकरिष्णू श
त्रुनिराकरणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धृसंमु
खे रणं परित इति वा अनुषञ्जनीयं वर्द्धिष्णू मायया वर्द्धनशीलौ
उत्पतिष्णू आकाशादुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघाता
दिसहनशीलौ सर्व्वत्र जिभ्राजभूसहेत्यादिना कर्त्तरीष्णुः शीला
र्थता तु ढचेकत्यश्चेति सूत्रे शीलार्थे तृन्नित्युक्तं किन्तु तृणविधायक
सूत्रे शीलार्थता नोक्ता अतएव तृणादयः कतिचित् प्रत्ययाः शी
लार्थेऽपि भवन्तीति सूचनात् किम्वा अभिधानाच्छीलार्थतानुक्ताव
पि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयं ॥ १ ॥

तौ खड्गमुषलप्रासचक्रवाणगदाकरौ। अकार्ष्टा
मायुधच्छायं रजःसन्तमसे रणे ॥ २ ॥

ताव। रणे रणभूमौ रजःसन्तमसे सङ्कतन्तमः सन्तमसं अव

समन्धेभ्यस्तमसदृत्यच् रजसा सन्तमसं अस्मिन् इति रजः सन्तमसन्तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधच्छायमायुधबाहुल्यमकार्ष्टाम् कृतवन्तौ आयुधानाञ्छायेति छाया बाहुल्य इति नपुंसकत्वे ह्रस्वत्वं खड्गादीनाम्बाणानान्द्वन्द्वैकवद्भावं कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्‌ः अन्यथा समुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् वाणगदमिति खड्गमुषलप्रासचक्रवाणगदाः करे येषामिति समासे प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः॥ २॥

तावित्यादि। खरदूषणौ रणे युद्धे आयुधानां बहूनां छायामकार्ष्टां कृतवन्तौ रणपदं रणभूमिवाचकमित्यन्ये सन्त्यक्तमः सन्तमसं समवान्धात्तमसइति अः रजसा सन्तमसं यत्र रणे आयुधानां बाहुल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् कीदृशौ खड्गादयः करे ययोस्तौ अकार्ष्टामिति कृञ्श्चांसि भजवदेति त्रिः ॥२॥

अथ तीक्ष्णायसैर्व्वाणैरभिमर्म्म रघूत्तमौ। व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्दिषौ॥ ३॥

अथ। अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ कर्म्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाचक्रतुः यमाधीनौ कृतवन्तौ तदधीनवचनइति सातिः तीक्ष्णायसैर्वाणैः तीक्ष्णमायसम्फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा आभीक्ष्ण्ये णमुल् तच्च समानकर्त्तृकयोः पूर्व्वकालइति वर्त्तते अभीक्ष्ण्ये द्वे भवत इति

द्विर्व्वचनं अधिमर्म्मेति विभक्त्यर्थेऽव्ययीभावः असूढौ सावधानौ रामलक्ष्मणौ मर्म्मवेधमेवाह॥ ३॥

अथेत्यादि। तयोर्व्विक्रमानन्तरं रघूत्तमौ कर्तृभूतौ तीक्ष्णाय सैस्तीक्ष्णफलैर्व्वाणैरधिमर्म्म जीवितस्थाने व्याधं व्याधं विद्धा विद्धा-तौ द्विषौ खरदूषणौ कर्म्मभूतौ यमसात् यमाधीनौ चक्रतुः रघूत्तमौ किम्भूतौ असूढौ रणपण्डितौ किम्वा खरदूषणौ असूढौ अस्त्रवर्षेऽप्यसम्भ्रान्तौ मर्म्मवेधे सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायसमयोविकारः फलं यत्र मर्म्म विध्यतीति कारकार्थेऽव्ययीभावः अथ्योताडे इत्यस्मात् चणम्बाभीक्ष्ण्ये इति चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कार्त्स्न्यायत्योः सम्पद्यकादावित्यधीनत्वे चसात् किम्वा देयत्रा चेति देयेऽर्थे चकारात् चसात् त्रा सुषित्यादिना द्विषः क्विप्॥ ३॥

हतबन्धुर्जगामासौ ततः शूर्पणखा वनात्। पारेसमुद्रं लङ्कायां वसन्तं रावणं पतिं॥ ४॥

हत। असौ सूर्पणखा हतबन्धुः व्यापादितभ्रातृद्वया ततोवनाद्दण्डकारण्यात्रावणम्पतिं प्रभुं शरणञ्जगाम गतवती पारेसमुद्रं समुद्रस्य पारइति पारेमध्येषष्ठ्यावेत्यव्ययीभावः तस्मिन्योगेन पूर्व्वपदस्यैकारान्तत्वम्पञ्चम्यास्त्वमी नाव्ययीभावादित्यभावःसमुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति॥ ४॥

हतबन्धुरित्यादि। असौ शूर्पणखा हतबन्धुः सती परेण व्यापादितभ्रातृद्वया सती ततोवनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारेसमुद्रं समुद्रपारे स्थितायां वसन्तं पारेसमुद्रमित्य

व्ययीभाव एत्वञ्च निपातनात् वीप्सेत्यर्थेभिति समस्यामः प्रतीति पाठे रावणं प्रति लक्षीकृत्य जगाम ॥ ४ ॥

संप्राप्य राक्षससभं चक्रन्द क्रोधविक्लवा। नामग्राहमरोदीत् सा भ्रातरौ रावणान्तिके ॥ ५ ॥

सम्रा। सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनङ्कृतवती क्रोधविक्लवा क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रोदितवती नामग्राहन्नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्न्या दिशिग्रहोरिति णमुल् अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्म्मकः रावणान्तिके रावणसमीपे सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यइति सप्तमी तयोः किञ्जातमिति रावणेन पृष्टाच ॥ ५ ॥

संप्राप्येत्यादि। सा शूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्षसानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विक्लवा व्याकुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावणस्यान्तिके समीपे अरोदीत् रुदेर्ण्यां व्यां रुदाद्यस्विमेरितीम् पूर्व्वं क्रन्दनमुक्तं अत्र नामग्रहणमुक्तमिति भेदः अश्रुविमोचनमात्रे रुदिरकर्म्मकः शब्दयुक्तक्रन्दने तु सकर्म्मकः इति प्राञ्चः भ्रातरौ चक्रन्द आजुहाव क्रदि आह्वाने नामग्राहमरोदीदित्यन्वय इति केचित् नामग्राहमिति नाम्नोग्रहणमभिधानात् किम्वा हा खर

दूषयेति नाशोयाशीयत्वं यत्नेति वा रोदनक्रियाया विशेषणं याशोघत्रन्त: ॥ ५ ॥

दण्डकामध्यवात्तां यौ वीर रक्ष:प्रकाण्डकौ। नृभ्यांसंख्येऽक्षपातां तौ सभृत्यौ भूमिवर्द्धनौ ॥ ६ ॥

दण्ड। हे वीर दण्डकात् दण्डकारण्यसन्निवेशात् अध्यवात्ताम् अध्युषितवन्तौ वसनिवासदत्यस्मात्लुङ् हलन्तलक्षणा वृद्धिः सःस्येत्यादिना धातुसकारस्य तत्वम् झलोझलीति सिचोलोपः रक्ष:प्रकाण्डकौ प्रशस्तौ राक्षसौ प्रशंसावचनैश्चेति सः ततः स्वार्थे कन् स्वार्थिकाश्च प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तदति नपुंसको न भवति अन्यथा रूढिशब्दाः प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः यथा गोप्रकाण्डमिति तौ नृभ्यामनुष्याभ्यां सङ्ख्ये युद्धे भूमिवर्द्धनावक्षपाताम् क्षतौ कर्म्मणिलुङ् अचिण्वद्भावे रूपम् वर्द्धेत इति वर्द्धनौ कृत्यल्युटोबहुलमिति कर्त्तरि ल्युट् भूमेर्व्वर्द्धनाविति सः भस्मीकृतशरीरस्य भूमौलीयमानत्वात् सभृत्यौ नैकाकिना ॥ ६ ॥

दण्डकामित्यादि। एवंप्रकारेणारोदीदित्यन्वयः वीरेति सोपालम्भसम्बोधनं यौ रक्ष:प्रकाण्डकौ प्रशस्तराक्षसौ दण्डकामध्यवात्तां सभृत्यौ तौ नृभ्यां मनुष्याभ्यां संख्ये संग्रामे भूमिवर्द्धनौ अक्षपातां क्षञ: कर्म्मणि टौ इगुङ्भ्यांढीति किलाञ्च गुण: शवस्तु चितिवर्द्धन इति त्रिकाण्डशेष: अरण्ये दण्डकाशब्द: स्त्रीलिङ्ग:

कायोध्याया: पुनरुपगमोदण्डकायां वने व इति भवभूति: दण्ड कानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थ: केचित्तु दण्डकाशब्द: स्त्रीलिङ्गवऊवचनान्त एव इत्युक्ता दण्डका इति शसन्तं पठन्ति अध्यशास्तामिति अधिपूर्व्वाद्दसेश्छीतां थांसि: सत्यरे इति सस्य त: अनिमलात् त्रि: रचसां मध्ये प्रकाण्डकौ प्रशस्तौ एकार्थत्वात् कर्म्मधारयोवा समासे विशेषणमपि परं स्यात् प्रशंसावचनैश्चेति परसूत्रं यद्यपि प्रकाण्डमुद्धतल्लजावित्यमरेणोक्तं दृश्यते च गो प्रकाण्डमित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिका: प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तेऽपीति न्यायात् पुंस्त्वं वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निगडाक्रीडनलप्रकाण्डकाण्डा इति पुनपुंसकवर्गे हेमचन्द्र: उद्धप्रकाण्डौ द्वौ प्रशंसायामिति हलायुध: भूमिं वर्द्धयत इति नन्द्यादित्वादन: ॥ ६ ॥

विग्रहस्तव शक्रेण वृहस्पतिपुरोधसा। सार्द्धं कुमारसेनान्या शून्यश्चासीति कोनय: ॥ ७ ॥

विग। वृहस्पति: पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयत इति पुरोधा: पुर:पूर्व्वाद्धाञ: सर्व्वधातुभ्य असुन् तथा कुमार: कार्त्तिकेय: सेनानीर्य्यस्य सेनान्नयतीति सत्सूद्विषेत्या दिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् इदानीं कार्य्यनिपुणाभावात् शून्यश्चासि तासस्त्योर्लोप इति सकारलोप: तस्मात्कोनय: नय एव न भवतीत्यर्थ: तदेव दर्शयन्नाह ॥ ७ ॥

विषय इत्यादि। शक्रेण शार्ङ्गं तव विपत्तिविरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति कोनयः न कापि नीतिस्तवेत्यर्थः किम्भूतेन वृहस्पतिपुरोधसा वृहतां देवानां गुरुत्वात्पतिः वृहस्पतिर्मनीषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कथ्यापनेकाच इति यत्वं लोपोऽव्ययोरिति अस्तेःसौ स लोपः॥ ७॥

यद्यहं नाथ नायास्यं विनसा हतबान्धवा। नाभ्यास्यस्त्वमिदं सर्व्वं प्रमाद्यंश्चारदुर्व्वलः॥ ८॥

यदी। विनसा विगता नासा यस्याः नासैव नासिकेति केण इति ह्रस्वत्वे रूपम् तस्या नसादेशस्य विधीयमानत्वात् अत्र सम्भव एव नास्ति विनसेति पाठान्तरम् तत्र विगता चासौ नासिका च विनासिका तत इत्थम्भूतलक्षणायान्तृतीयायां पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिष्वित्यादिना नसादेशः विगतया नासिकयोपलक्षितेत्यर्थः विगता नासिका अस्या इति बहुव्रीहिणा व्याख्याने अञ्नासिकेत्यादिना अञ् नसादेशस्य प्राप्नुतः तस्य संज्ञाविषयत्वात् उपसर्गाच्चेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रोवक्तव्यइति ग्रादेशो बाधकः हे नाथ यद्यहं विनसा हतबान्धवा नायास्यन्नायाताभविष्यम् तदा तदिदं सर्व्वम्भूचोर्व्वधनाथाछिदस्य माज्ञास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लिङ् अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादङ्कुर्व्वन् चारदुर्व्वलः चारहीनः चारा हि चतुराः कार्य्याकार्य्यज्ञापनाय लोके चरन्तीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण्॥ ८॥

यदीत्यादि। हे नाथ विनसा हतबान्धवा च यतो यदहं नाथा त्वं तदा त्वमिदं सर्व्वं पूर्व्वोक्तं नाज्ञास्यः याज्ञाभ्यां ध्वर्थासम्भवे थी अज्ञाने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्यो प्रमादीति प्रमादित्वाद्दीर्घः प्रमादोऽनवधानता चारेण दुर्ब्बलो हीनः राजा चरैर्जगत्कृत्स्नं प्राप्नुयालोकयन्नतीरिति हि शास्त्रं विनसा इति विगता नासा नासिका यस्याः सा विर्नसा केचित्तु वि गतया नासिकया उपलक्षिता विशेषणे तृतीया पादद्न्तेति नसा देश इत्याहुः बन्धुरेव बान्धवः चर एव चारः स्वार्थे ष्णः॥ ८॥

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः। अप कारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान्॥ ९॥

करि। परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणङ्कार्य्यं वि ज्ञेयम् किन्तु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः त्वन्तु पुनः परै रपकृतोऽपि अज्ञोऽविदितस्वरूपः अतोविजिगीषुर्नवा भवान् सुप्तो न राज्यं सम्भावयतीत्यर्थः॥ ९॥

करिष्यमाणमित्यादि। परैः शत्रुभिः करिष्यमाणमपि कार्य्यं विज्ञेयं अर्थाज्जिगीषुणा किन्नु कृतं तदवश्यमेव विज्ञेयमित्यर्थः परैः कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् नवा विजिगीषुः ज्ञेर्गिःसनश्चोरिति गिः जानातीति ज्ञः कृगृज्ञाप्रीति कः उश्चेत्ती त्यादिना आकारलोपः आदन्तात् कनेष्टसिद्धौ कृगृज्ञाद्यत्र ज्ञाग्रहणेन क्षमजनादित्यस्य उपपदस्यैव विषयः कृगृज्ञा इत्य स्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितं वाशब्द आक्षेपे प्रश्ने वा॥ ९॥

वृतस्त्वं पात्रेसमितैः खट्वारूढः प्रमादवान्। पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः ॥ १० ॥

वृत:। अत्यन्तङ्गामिनीति अवारपारेत्यादिना खः तस्य भावोऽत्यन्तीनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियन्नेता न प्रापणशीलः तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि महोदयं राज्यम्प्राप्तवानसि तथापि न चिरकालमित्यर्थः यतस्त्वमुन्मनाः भ्रान्तचित्तः यतः पानशौण्डः पाने प्रसक्तः सप्तमी शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्रस्थितः खट्वाक्षेप इति द्वितीया सः तत एव पात्रेसमितैः भोजन एव सन्निहितैः अनुजीविभिर्वृतः पात्रेसमितादयश्चेति क्षेपे सः ॥ १० ॥

वृत इत्यादि। त्वं श्रियं आत्यन्तीनत्वं अत्यन्तगामित्वं न नेता न प्रापयिष्यसि नीञादिकर्म्मकात् तृण् ढघेहत्यक्षेत्यादौ शीलार्थे तृणवर्ज्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे खीनः तस्य त्वजात्याख्य इति पुम्वत् हेतुमाह पात्रेसमितैर्भोजनपात्र एव समितैः सन्निहितैः कार्य्यान्तराक्षमैरनुजीविभिर्वृतोवेष्टितः अत्राक्षेपे समासो विभक्त्यलोपश्चाभिधानात् खट्वारूढः विपथप्रस्थितः क्रेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्वमते समासे सति मण्डपादिवत् स्वभावादर्थान्तरे वृत्तिः प्रमादवान् अनवधानतायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रान्तचित्तः ॥ १० ॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आव्रमान्। अत्तुं महेन्द्रियं भागमेति दुश्च्यवनोऽधुना॥ ११॥

अध्व। त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्रः आव्रमानेति आगच्छति आङ्पूर्व्वस्येणः एत्येधत्यूठ्स्विति वृद्धिः सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप् तसौ मत्वर्थं इति भत्वे तकारस्य जश्त्वम् भवति झय इति मतोर्व्वत्वम् किमर्थमेतीत्याह अत्तुम्भक्षयितुम्महेन्द्रियम्भागं महेन्द्रो देवता अस्येति महेन्द्राद्घाणौ चेति घः क्व अध्वरेषु यज्ञेषु अग्निचित्वत्सु अग्निश्चितवन्तोऽग्निचितः आहिताग्नयः अग्नौ चेरिति क्विप् ते सन्ति येष्विति पूर्व्ववन्मतुप्॥ ११॥

अध्वरेष्वित्यादि। तवैव प्रमादात् अधुना इदानीं दुश्च्यवन इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदैवतं भागं अत्तुं भक्षयित्तुं आव्रमानेति आगच्छति स भागो राक्षसग्राह्य एवासीदिति भावः कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः चासु मिति चेः क्विप् स्वस्यतन्पिति ततोऽस्त्यर्थे मोऽन्मश्चपादतुः मर्हं तसाविति पदत्वनिषेधात् न चपोऽवेजव कीदृशान् सोमसुत्वतः सोमं सुतवान् सोमसुत्यमानः तद्युक्तान् पूर्व्ववत् क्विवादि सोमोलतासवनं सस्थानं महेन्द्रो देवता अस्येति विकारसंघेत्यादिना इयः॥ ११॥

आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधं। हविर्यज्ञीनञ्च नाप्युपघ्नन्ति राक्षसाः॥ १२॥

आमि। दृग्धा यहितं शृतं पय आमिक्षा तस्मै हितमामिक्षीयं विभाषाहविरपूपादिभ्य इति छयतौ दधि च क्षीरञ्चेति विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधन्नीवारतण्डुलादि पुरोडाश्यमपूपादित्वाद्यत् ओषधिरेवौषधम् ओषधेरजाताविव्यण् तण्डुलानामजातित्वात् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसकलिङ्गता हविः छयत इति हविः अर्च्चिशुचीत्यौणादिक इस् हैयङ्गवीनं घृतं ह्योगोदोहस्य विकार इत्यर्थे हैयङ्गवीनसंज्ञायामिति निपातनात्खञ् हियं स्वादेशश्च तानि नाप्युपपन्नानि राघवाः लम्युदासीने सति इदानीञ्चार्थ्यप्रदर्शनेन प्रोत्साहयितुमाह ॥१२॥

आमिक्षीयमित्यादि। अधुना राघवा अपि एतानि वस्तूनि न उपपद्यन्ति अपिशब्दः पूर्व्वापेक्षया कानि आमिक्षार्थे हितं दधि दुग्धञ्च व्यञ्जनत्वे समाहार इति परः स्वमतेऽभिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः हितार्थे ईयः तथा पुरोडाशाय हितं औषधं नीवारतण्डुलादि पुरोदश्यते इति पुरोडाशो ऽन्नविकारः पिष्टकादिः निपातनात् ततो हितार्थे यः ओषधिशब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति क्लीबत्वं हविर्हव्यञ्च ऊहाने वासुषिसितीस् ह्योगोदोहस्य विकारो हैयङ्गवीनं निपातनात् तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः ॥ १२ ॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः। रामो यथाद्रुघोघ्नन्ति कालकल्पशिलीमुखैः ॥ १३ ॥

युव। युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् वलिलोपः स्त्रियाः पुंवदिति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनुष्पाणिः पाणौ धनुर्यस्य प्रहरणेत्यादिना परनिपातः भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः सुपिस्थ इति कः अम्बाम्बेत्यादिना षत्वम् कालकल्पशिलीमुखः मृत्युतुल्यशरः रामो राक्षसान् हन्ति खविचारिणः आकाशचरणशीलान् सुप्यजाताविति णिनिः॥ १२॥

युवजानिरित्यादि। भूमिष्ठोऽपि रामः खविचारिणोऽपि यस्माद्द्रुहो राक्षसान् हन्ति भूमौ तिष्ठतीति सुपि स्थ इति कः षत्वं अम्बाम्बेत्यादिना खे आकाशे विचरितुं शीलं येषां ते तथा सुप्यजातौ णिनिस्ताच्छील्य इति णिनिः परः खमते खे विचरन्तीति पचादित्वादच् । द्रुह्यन्तीति क्विप् कीदृशो रामो युवजानिः युवती जाया यस्य स तथा बहुव्रीहौ जायाया निङिति निङ् परः खमते जाया समानार्थो जानिशब्दोऽस्ति जनी सीमन्तिनीवध्वोरित्यनुशासनात् जनीशब्दस्य स्वार्थिकष्यन्तस्य जानिरिति रूपम्बा पुम्वत् स्त्र्युक्तपुंस्क इति पुम्वद्भावः धनुः पाणौ यस्य स तथा षत्वविधानं मवावजातैरित्यत्र व्याख्यातं ईषदूनः कालः कालकल्पो यमतुल्य इत्यर्थः तादृशः शिलीमुखो बाणो यस्य स तथा स्यादेषोनेऽविकल्पः॥ १३॥

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः। श्वश्नन्ति रामाद्रक्षांसि बिभ्यत्यश्नुवते दिशः॥ १४॥

मांसा। ओष्ठावलोप्यानि ओष्ठाभ्याञ्छेदार्हाणि शक्यानि वा अर्हार्थे शक्यार्थे वा कृत्यः कृत्यैरधिकार्थवचन इति सः।

साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः साव नीयानीति पाठान्तरम् तत्र सवनं स्नानं तद्योगात्स्नातकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसाः रक्षांसि किन्तु रामाद्बिभ्यति वा नपुंसकस्येति शतुर्नुमभावपक्षे रूपं दिशोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥

मांसानीत्यादि। इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामाद्बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति पलायन्त इत्यर्थः कीदृशानि मांसानि ओष्ठावलोप्यानि छेत्तुं शक्यानि लुप्लृछेदने तेभ्यः शक्यार्थ इति शक्यार्थे ण्यण् साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसतायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अशभोजने श्नाभ्योरित्यालोपः बिभ्यतीति ञिभीभि भीत्यां शतृः श्लादीरेद्विः दैः शतुर्नुन् श्लाविति पक्षे नुमोऽभावः अश्यन्तामिति केचित् तदा अन्तोऽद्वेरित्यत् अशूङ्व्याप्तिसंघातयोः श्नुभ्वोरित्युव् मान्तोऽदनतः ॥ १४ ॥

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज। लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

कुरु। कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुशाग्राच्छ इति इवार्थे छः स्थूलबुद्धिर्माभूदित्यर्थः अनुकामीनतान्त्यज यथेष्टगामितान्त्यज अवारपारेत्यादिना खः परम्परीणाम्परांश्चापरांश्च अनु भवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च

तां लक्ष्मीक्रमायातामस्मत्पुत्रपौत्रीणतामथ पुत्रांश्च पौत्रांश्चानु भवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥

कुर्व्वित्यादि। त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु वि कारसंघेति कुशाग्रादिवार्थे ईयः अनुकामीनतां कामस्य अभि लाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामात्तद्गा मिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्र पौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परश्च परतरश्च इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनुभवतीत्यर्थे पूर्व्वेण ईनः ॥ १५ ॥

सहायवन्त उद्युक्ता बहवोनिपुणाश्च यां। श्रियमाशासते लोलां तां हस्तेकृत्य मास्वसीः ॥ १६ ॥

सहा। याश्च श्रियन्त्वदीयां शौर्य्योपात्तां सहायवन्तः ससहा या उद्युक्ता उत्साहवन्तो निपुणाः कुशलाश्चाशासते इच्छन्ति आङःशासुइच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् आत्म नेपदेष्वनत इत्यदादेशः तां हस्तेकृत्य स्वीकृत्य मास्वसीः आस्वासमाकार्षीः चञ्चलत्वात् यदाह लोलामिति ह्मन्तक्षण श्वसजागृणीति वृद्धिप्रतिषेधः इटईटीति सिचोलोपः नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यबादेशः तां लोलतान्ध प्रयत्नाद ॥ १६ ॥

सहायवन्तइत्यादि। सहायवन्तः प्रशस्तसहाययुक्ता उद्युक्ता उद्योगिनो बहवोनिपुणाः कर्मकुशला यां श्रियं आशासते

इच्छन्ति तां श्रियं इवेकस्य स्त्रीकस्य मान्यधीः श्रात्मार्थे नाका र्थेः यतोलोकां यथलां आकःशायदच्छायां सदादिरात्मने पदी इत्येवम्यः सतम्मन्तप्रतिरूपकोऽव्ययः स्त्रीकारे वर्त्तते इत्ते पाचौप्राध्वमित्यादिना समासः थ्याद्यत्र क्रोयषो आकःधाय धातिः इयादेः येन इत्यादौ स्वयवर्णनाल निः ॥ १६ ॥

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्। अन्ति केऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥

लक्ष्मीः। त्वयैवं न मन्तव्यम् अन्यैः प्रार्थ्यमानापि न मामरि त्यजतीति यतः छलेन व्याजेन अन्यन्निरीक्षते किमर्थं पुंयोग माशंसुः अभिलषन्ती समाशंसभिक्षः कुतूहलात् कोऽस्य विशे षइति खेदादन्तिके अदूरेऽपि स्थिता पत्युः दूरान्तिकार्थैरित्या दिना षष्ठी कुलटेव यस्त्रैकोव सकन्ध्वादिषु दर्शनात्पररूपम् युवजानिरित्युक्तत्वाविस्मलोभनायाह ॥ १७ ॥

लक्ष्मीरित्यादि। चोलता दर्शयति लक्ष्मीः पत्युरन्तिके स्थिता ऽपि सुतरां दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरी क्षते केनापि छिद्रेण गन्तुमित्यर्थः यतः पुंयोगमाशंसुः अभिलष न्ती एकेन पुंसा तृप्तिर्नास्तीत्यर्थः अतएव कुलटा इव असतीव कु लान्यटति पचादित्वादच् मनीषादित्वात्ककारलोपः सम्भिषा शंसउरिति आपूर्व्वशंसेरुः ॥ १७ ॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी। दूर्व्वा काण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥

योषित्। योषिच्चासौ वृन्दारिका चेति वृन्दारकेत्यादिना सः रूपेण प्रियेत्याह दयिता प्रिया प्रशस्तत्वे कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्य्युपमान इति णिनिः दूर्व्वाकाण्डमिव श्यामा दूर्व्वाश्यामन्तदिव श्यामा न्यग्रोधपरिमण्डला उपमानानीत्यादिना सः ॥ १८ ॥

योषिद्वृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य रामस्य दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दारिका रूपवती हंसवन्नदतीति हंसनादिनी कर्त्तर्य्युपपदाण्णिनिरिति परः स्वमते यद्वादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति यथा गत्या नितम्बिनी या तु हंसलीलानुगामिनी। मत्तकोकिलशब्दा सा ज्ञेया हंसनादिनी। दूर्व्वाकाण्डमिव तन्वी कृशाङ्गीत्यर्थः दूर्व्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं तस्य गौरत्वकथनात् श्यामान्यग्रोधपरिमण्डलाशब्दौ रूढौ यथा शीते सुखोष्णसर्व्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। स्तनौ सुकठिनौ यस्या नितम्बे च विशालता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तं यथा प्रसारितभुजस्येह मध्यभागद्वयान्तरं। उच्छ्रायेण समं यस्य न्यग्रोधपरिमण्डलइति केचित्तु दूर्व्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग्रुणद्धीति न्यग्रोधं अधःप्रसृतं परितोमण्डलं नितम्बमण्डलरूपं यस्याः दूर्व्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहो नितम्बभागे यस्याः एकदेशधर्म्मेणापि वस्तुराशेरुपमानतादर्शनादित्याहुः

श्यामा अप्रसूतेति केचित् अप्रसूताङ्गनायाञ्च श्यामा सोमलतौषधौ। चिह्नताशारिवागुञ्जा निशाकृष्णा प्रियङ्गुष्विति विश्वः ॥ १८ ॥

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा। संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१९॥

नास्य। तस्या आस्यमुखं यो न पश्यति दन्तच्छदं ओष्ठञ्छाद्यते अनेनेति घः छादेर्घेऽद्व्युपसर्गस्येति ह्रस्व दन्तानाञ्छदंनवा निंस्ते न चुम्बति णिसि चुम्बन इत्यादादिक आत्मनेपदी इदितो नुम् धातोः उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥ १९ ॥

नास्यमित्यादि। यस्तस्या आस्यं मुखं न पश्यति नवा दन्तच्छदं ओष्ठं निंस्ते चुम्बति निसिलङ् चुम्बने नवा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियो मिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः वृथेति क्वचित्पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्ताञ्छाद्यतेऽनेनेति छादेर्घेऽद्व्युपसर्गस्य इति ह्रस्वः घेस्वइत्युक्तेर्नान्यन्येतिक्तेति संज्ञायां घप्रत्ययोबोध्यः ओष्ठाधरौ तु रदनच्छदाविममरः ॥ १९ ॥

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः। तस्य कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्निमज्जथुं ॥ २० ॥

सारो। इन्द्रियार्थानामध्ये सारोऽसौ दयिता इन्द्रियार्थः रूपाद्यतिशययोगात् यस्यासौ संपद्यते तस्य नन्द्युः आनन्दयेतसः तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्द्धं निमज्जथुं शयनं सर्व्वत्र ट्विताऽथुच् तस्य धिक् कुत्सितमहं मन्ये उभयत्र सर्व्वतसोरित्यादिना धिग्योगे द्वितीया तथा सार्द्धं शोभनमित्यर्थाद्गम्यते ॥२०॥

सार इत्यादि। इन्द्रियस्य अर्था विषयाः स्रक्चन्दनवनिता इत्यस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा यस्य असौ सीता विद्यते तस्यैव नन्द्युरानन्दः कान्तान्तरैः सार्द्धं तल्पे शय्यायां निमज्जथुं निमज्जनं शयनं धिक् तथैव सार्द्धं युज्यत इत्यहं मन्ये उभयत्र ट्विताऽथुर्भावे धिक्समयेति द्वितीया ॥ २० ॥

न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः। त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

नतम्। सर्व्वथा न तम्पश्यामि जानामि जगति यस्य सम्बन्धिन्याः मतेश्चेतसः उद्वेजया उत्कम्पिकाऽसौ न भवेत् चित्तक्षोभजनिकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्त्तरि शः तद्योगे कर्म्मणि षष्ठी तस्मात् त्रैलोक्येनापि त्रयस्त्रैते लोकाश्चेति त्रिलोकाः तएव त्रैलोक्यञ्चातुर्व्वर्ण्यादित्वात्स्वार्थे ष्यञ् स्वार्थिका अतिवर्त्तन्त इति नपुंसकत्वम् तेनापि तां क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव आश्लीवा भव पाण्डित्यमस्य त्रैलोक्यमात्रे

चापि स्त्रीरत्नदुर्लभमिति विन्दतीति तेनैव सूचितं यः अन्या अपि स्त्रियः लभ्नोति चेदाह ॥ २१ ॥

नतमित्यादि। असौ सीता यस्य मनोहृद्भार्या लोभजनिका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां कीला त्वं विन्दा लाभवान् सुकृती च भव सुकृतिः पुण्यवान् शोभनः कृती पण्डितो वा तत्कथमादेव तव लाभवत्त्वं पुण्यवत्त्वं पाण्डित्यञ्च सफलं अन्यथा निष्फलमिति भावः इजन्तकर्म्मे इजेरङः अ इति परः स्वमते वाहिमातीत्यादिना अगेरित्यस्य नञा निर्दिष्टस्य व्यभिचारात् अः विदुश्रपञ्चौ लाभे पूर्व्वेण अः मुखादित्वान्न णत्व त्रिलोक्येव त्रैलोक्यं स्वार्थे ष्यः स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीवत्वं ॥ २१ ॥

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी। वरुणानी नचाग्नायी तस्याः सीमन्तिनी समा ॥ २२ ॥

नैव। तस्यास्तु सीताया तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी न काचित्सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशेष्विति पररूपत्वम् अन्यत्र सीमान्तः स विद्यते यस्य इति इनिः इन्द्राणी इन्द्रभार्य्या न समस्त् किम्पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् मनावी मनुभार्य्या मनोरौवेत्यौकारः अग्नायी अग्निभार्य्या वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति वर्त्तते पुंयोगादाख्यायामिति ङीष् रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारश्च

वरुणानी न आग्नायीत्यत्र प्रतिषेध एकः पूर्व्वेण योज्यः द्वितीयः परेणेति अथवाग्नायीति पाठान्तरम् ॥ २२ ॥

नैवेत्यादि । काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा तुल्या न सर्व्वत्र नञ्सम्बन्धादिह नञ्सम्बन्ध उपपद्यते इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न एव नियमे इन्द्ररुद्रभवेत्यादिना पत्यादीप् आनङ् च रुद्राणी रुद्रस्य पत्नी पार्व्वती समा न पूर्व्ववत् ईप् आनङ् च मनावी मनोः पत्नी शतरूपा न समा नारीव सीत्यादिना निपातः रोहिणी चन्द्रस्य भार्य्या न समा पूर्व्वेण निपातः वरुणानी वरुणस्य पत्नी न समा इन्द्रवरुणेतीप् आनङ् च अग्नायी अग्नेः पत्नी न समा वृषाकप्यग्नीतीप् ऐङ् च केचित्तु इन्द्राणी न समा कीदृशी प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धतिरिति हलायुधः मनीषादित्वात्साधुः तस्या इति समार्थैरित्यादिना षष्ठी ॥ २२ ॥

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किं । व्रज
नक्तञ्चरि क्षोभं वाचाटे रावणात्त्वकं ॥ २३ ॥

प्रत्यू । राक्षसेन्द्रो रावणः राक्षसीं प्रत्यूचे प्रतिवचनमुक्तवान् आश्वसिहि खेदन्त्यज रुदादीत्यादिना इट् बिभेषि किं किमर्थं त्रासमकात् हे नक्तञ्चरि मद्विषये क्षोभं रोषन्त्यज वाचाटे बहुभाषिणि आलजाटचौ बहुभाषिणि यस्माद्रावणोऽहम् अनेनात्मोत्कर्षमावेदयति तमेव स्फुटयत्याह ॥ २२ ॥

प्रत्यूचेत्यादि । स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे

प्रत्युत्तरमाह आश्वसिहि खेदं त्यज रक्षोऽयमिति इम् किं बिभेषि तापसकात् हे नक्तञ्चरि क्षोभं दुःखं मयि रोषं वा त्यज हे वाचा टेवकुत्सितं भाषणशीले हि यस्मात् अहं रावणः प्रसिद्धनामानुवादात् उत्कर्षः सूचितः वाचोऽस्त्यर्थे वाग्मिवाचाटवाचाला इति निपातः वाचाटोवकुगर्ह्यवागित्यमरः रवणस्य विश्रवसोऽपत्यं रावणः विश्रवसो विश्रवणरवणावपत्यार्थे इति परः स्मरते सर्व्वभूतानि रावयति आक्रन्दयति रावणः नन्द्यादित्वादनः किम्वा हिंसनधर्म्मत्वात् रावणः हिंसार्थरुधातोरनटि रवणं ततः अस्य शीलं इत्यर्थे विकारसंघेत्यादिना अणः अत्रापि वा नन्द्यादित्वादनः ततः स्वार्थे अणः रुशब्दध्वनौ रुङ्वधे गत्यां ॥ २३ ॥

मामुपास्त दिदृक्षावान् याष्टीकव्याहतोहरिः। आशालाभोन्मुखोदूरात् काचेणानादरेक्षितः॥ २४ ॥

माम्। मामुपास्त सेवितवान् हरिरिन्द्रः दिदृक्षावान् द्रष्टुमिच्छावान् आत्मदर्शनेच्छावानित्यर्थः दूरादेव याष्टिकैः वेत्रग्राहिभिर्व्याहतोऽपसारितः कर्त्तृकरणेकृतेति सः यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् आशालाभे किमभिधास्यतीत्युत्सुकः उन्मुखः तत्परः सप्तमीति योगविभागात्सः अनादरेक्षितः अवज्ञाविलोकितः काचेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते अथ तत्पुरुषइति नानुवर्त्तते सामान्ये

वहुशइत्यादि कुम्भकर्णवशः आत्मानं बलिनं मन्यते कुतइत्याह मम वक्षसि शतधा शतप्रकारेण अभिन्नं केवलं विरुग्णानि भग्नानि उदग्राणि महान्ति धारायाणि यस्य तादृशः बली यस्तोमवत्त्वात्तर्पि मदवक्षसम्भङ्गादेव बलं जानाति अमुरवमूहविदारणादपीदमेव तस्याधिकमुत्कर्षस्थानमित्यर्थः तस्य वताकृपलाममननमस्त्येव उत्प्रेक्षामात्रं वा मन्यत इव इत्यर्थः ध्याघाधाच् प्रकारे ॥ २५ ॥

कृत्वा लङ्काद्रुमालानमहमैरावतं गजं । बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजं ॥ २६ ॥

कृत्वा । एत्यालीयतइत्यालानं अधिकरणे ल्युट् विभाषा लीयतइत्यात्वम् लङ्काद्रुमा आलानानि यस्यैरावताख्यस्य गजस्यतं कृत्वा नतप्रमुखन्तृणमिव मत्वा सोऽहमत्यजम् त्यक्तवान् बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥ २६ ॥

कृत्वेत्यादि । लङ्काद्रुम एवालानं बन्धनस्तम्भो यस्य तथाभूतं ऐरावतं गजं कृत्वा नतं नम्रं तं अहं तृणवत् अत्यजं अथवा तं गजं तृणवत् न अत्यजं अपि तु अत्यजमेवेति शिरश्चालने नञ् कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानं आधारेऽनट् मिम्योर्थ्योभ्योऽश्वलिलिलयस्तुवा इति पचे इरा इरावान् समुद्रः तत्र जात इति ढघेकादिति ष्णः ॥ २६ ॥

आपीडपुष्पिकां पश्य मम सद्रत्नकान्तिभिः । ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

आहो। अहोपुरुषस्य भावः मनोज्ञादित्वाद्वुञ् आहोपुरुषिका कार्य्यसिद्धावपि तत्साधने वृत्तिः तामम शूर्पणखे पश्य यद्रत्नकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा सन्निधानस्य पुनस्तेन कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥

आहोइत्यादि। ममाहोपुरुषिकां पश्य यद्रत्नकान्तिभिः यद्रत्नानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूत्वा चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितं अहमेव पुरुषोऽयमेति सम्भावनायामाहोपुरुषिका निपातनात् आहोपुरुषिकादर्पाद्या स्यात्सम्भावनात्मनीत्यमरः। अहोपुरुषस्य भाव आहोपुरुषिका इति केचित् तदा विकारसंघेतिभावे कण् स्त्रीत्वमभिधानात् कायनाभीरुकइति अत इत्वं यदेति कुतःककुहेत्यादिना निपातितं ॥ २७ ॥

हृतरत्नश्च्युतोद्योगो रक्षोभ्यः करदो दिवि। पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥

हृत। हृतोच्चैःश्रवआदिरत्नोगोत्रभिदिन्द्रः अतएव च्युतोद्योगः दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तम्प्रयच्छन् पूतक्रतायीं शचीं पूतक्रतोरैच्चेति पुंयोगादाख्यायामिति सत्रपः सव्रीडः किन्नाभ्येति न ढौकते ॥ २८ ॥

हृतेत्यादि। गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः

सन् पूतक्रतायीं समार्य्यामपि नाभ्येति नाभिमुखीन गच्छति अपि तु तथैव सन्त्रपते हेतुमाह यथा हृतरत्नः हृतं रत्नं यस्य स तथा बलितोद्योगः राक्षसेभ्यः करदः करं राजग्राह्यभागं ददातीति डः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ईप् ऐङ् च गोत्रान् पर्व्वतान् यो भिनत्ति सोऽतिबलीयान् इति साभिप्रायं पदं ॥ २८ ॥

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः। त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

अतु। तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः कृञो हेत्वित्यादिना टः तथापि त्वत्प्रार्थनया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९ ॥

अतुल्येत्यादि। यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये त्वत्प्रार्थनयेति शेषः त्रपां लज्जां करोतीति स्कुष्टः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी मितास्त्रभृत्। समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

उत्य। उत्यैवह्युन्माकाशमुत्पत्य मारीचमभि चक्रमे चच मारीचोराक्षसस्तत्र गत इत्यर्थः अनुपसर्गादिति क्रमेस्तङ् मनो वद्याशु यातुं शीलमस्येति कर्त्तर्य्युपमान इति णिनिः शितश्चन्द्र गृहीततीक्ष्णचन्द्रहासः समुद्रस्य सविधे समीपे आवासोयस्य मारीचस्य सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीप वाची॥ ३०॥

उत्पेत्यादि। एवमुक्ता दशग्रीवोरावणः खमाकाशं उत्पत्य मारीचं प्रति लक्षीकृत्य चक्रमे गतः वागेरिति मं द्वितीयाभिनि त्तकस्य प्रतिशब्दस्य गित्वाभावात् मन इव शीघ्रं यातीति मनो यायीति कर्त्तर्य्युपमाने उपपदे णिनिति परः स्वमते गोचादि त्वाश्विन् व्याघ्रस्वासौ श्वाचेति वाक्यं कुर्व्वता क्वचिदुपमानव्यञ्ज कशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्य र्थोगम्यते शितं तीक्ष्णमस्त्रं विभर्त्तीति क्विप् समुद्रस्य सविधे समी पे आवासो यस्य तं। सदेशाऽभ्याससविधसमर्य्यादसवेशवदित्य मरः॥ ३०॥

सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत्। चक्षु नाथ श्रुतार्थेन तेनागादि दशाननः॥ ३१॥

सम्प। असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे अत्रापि सह नीडेनेति व्युत्पत्तिमात्रम् समेत्य यात्वा तं वृत्तान्तं शूर्पणखा कथितमशिश्रवत् श्रावितवान् शृणोतेर्ण्यन्तस्य लुङि रूपम् तेन मारीचेन श्रुतार्थेन चक्षुना वचनशीलेन दशाननः अगादि उक्तः कर्म्मणि लुङ्॥ ३१॥

संपत्येत्यादि। असौ रावणः तस्य सनीडे समीपे संपत्य संगत्य तं मारीचं वृत्तान्तं शूर्पणखोक्तं अभिअवत् आवितवान्। समीपे निकटासन्नसन्निकृष्टसनीडवदित्यमरः। अथ अनन्तरं श्रुतार्थेन तेन मारीचेन चक्षुना भीतेन इग्राननोऽगादि उक्तः कर्माणि टो ॥ ३१ ॥

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर। योरणे दुरुपस्थानो हस्तरोधं दधद्धनुः ॥३२॥

अन्त। हे राक्षसेश्वर त्वन्तस्माद्रघुव्याघ्रादन्तर्द्धत्स्व अन्तर्हितोभव व्यवहितो भवेति यावत् दधातेर्लोटि श्राभ्यस्तयोरित्याकारलोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा यस्मात्स रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति आतोयुचेति युच् यतोहस्तरोधन्द्धद्धनुः हस्तेन रुध्वा सदैव योधमुर्धत्ते स कथन्दुरुपस्थानो न भवति हस्तमव्दे तृतीयान्त उपपदे सप्तम्यान्चोपपीडरुधकर्ष इति णमुल् चकारेण तृतीयायाः समुच्चितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः तदेव दुरुपस्थानत्वं स्फुटयन्नाह ॥ ३२ ॥

अन्तरित्यादि। हे राक्षसेश्वर तस्माद्रघुव्याघ्रात् त्वं अन्तर्द्धत्स्व स यथा न पश्यति तथा व्यवहितोभव अन्तःपूर्व्वधाञोगीत्त्वः क्रादीरेडिः श्नभ्यस्येत्यादिना खेर्ह्रस्वः धस्य दस्य श्नमान्तस्येति दस्य धः आशोराज्ञोण्दत्वालोपः श्नपञ्चमेरिति धस्य तः यतोऽपायेत्यादिना अन्तर्द्धौ पञ्चमी हेतुमाह योरामोदुरुपस्थानः

दुःखेनोपस्थीयते उपगम्यते प्रभुभिः समीपगमनमेवाशक्यं किं पुन र्युद्धमिति भावः आतोमोऽद्वदिद्रद्दति अनः यतोहस्तरोधं सदा धनुर्दधाति हस्तेन रुद्धा हस्तरोधं आसक्तौ तृतीयान्ताद्रुधोणम् इति परः लेन सदा स्थिरतरं धनुर्दधातीत्यर्थः केचित्तु हस्तं रु द्धेत्यर्थे स्वाङ्गात् रुधेर्णम् तेनान्यकर्मनिवृत्तिर्हस्तस्य गम्यत इत्या हुः खमते हस्तं रुणद्धि कार्य्यान्तराद्व्यावर्त्तयतीति ढात् षण् धनु र्व्विशेषणं॥ २२॥

भवन्तं कार्त्तवीर्य्योयोहीनसन्धिमचीकरत्। जि गाय तस्य हन्तारं स रामः सार्व्वलौकिकः॥ २३॥

भव। यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं सहस्रबाहुः भवन्तं हीनसन्धिमचीकरत् हीनेन दुर्व्वलेन यः सन्धिः तम्भवन्तङ्का रितवान् तेन हीनत्वं बलान्निर्ज्जित्य कारित इति दुरुपस्थानमु क्तम् हृक्रोरन्यतरस्यामिति द्विकर्म्मता तस्य कार्त्तवीर्य्यस्य योह न्ता परशुरामः कृत्प्रयोगे कर्म्मणि षष्ठी तेन हि तस्याग्निहोत्रधे नुमपहृत्य गच्छतः परशुना बाहुसहस्रच्छिन्नम् तस्य हन्तारं सरामो जिगाय जितवान् जयतेर्लिटि धातुअकारस्य संलिटोर्जे रिति कुत्वम् सार्व्वलौकिकं सर्व्वलोके विदितं लोकसर्व्वलोकाभ्यां ठञ् अनुशतिकादित्वादुभयपदवृद्धिः सार्व्वलौकिक इति पाठा न्तरम् तच राम इति योज्यम्॥ २३॥

भवेत्यादि। दुरुपस्थानत्वं स्फुटीकुर्व्वन्नाह यः कार्त्तवीर्य्योऽर्ज्जु नोभवन्तं हीनसन्धिं भग्नसन्धिं अचीकरत् कृतवान् क्रमःस्वार्थे

भिः पुर्भोजिभ्यां इत्यत्र योगविभागात् क्वचित्पुराद्देरन्यस्मादपि स्वार्थे भिर्भा भवतीति बोध्यं तेन रामोराज्यमकारयदित्यादिप्रयोगाः यद्वा क्षीणजनेन सह सन्धिं सन्धानं मिलनं कारयामास अक्रूरयात् भवता क्षीणजनोऽधाश्रितइत्यर्थः घोऽच्चोर्जेरिति अयोध्यकर्त्तुः कर्म्मता कतवीरस्यापत्यं कार्त्तवीर्य्यः गर्गादित्वात् यञः तस्य कार्त्तवीर्य्यस्य ह्न्तारं परशुरामं स रामोजिगाय जे गिःसन्वोः सार्व्वलोकिकं सकलचत्रियनाशेन सर्व्वलोकविदितम् प्रथमान्तपाठे रामविशेषणं तत्र विदितइत्यर्थे ढघेकादिति ष्णिकः ञित्तेर्निरिति अनुभगादित्वात् उभयपदे वृद्धिः ॥ २३ ॥

यमास्यदृश्वरी तस्य ताडका वेत्ति विक्रमं । शूरम्मन्योरणात्रायं निरस्तः सिंहनर्द्दिना ॥ २४ ॥

यम । तस्य रामस्य विक्रमं ताडका वेत्ति ज्ञातवती वर्त्तमानसामीप्य इति भूते लट् कीदृशी यमास्यदृश्वरी तच्छरताडिता यममुखम्दृष्टवती मृतेत्यर्थः दृशेः क्वनिप् वनोरचेति ङीप्रेफौ अहमपि शूरम्मन्यः शूरमात्मानमन्यमानः आत्ममाने खश्च सिंहनर्द्दिना रामेण सिंहइव नर्द्दतीति कर्त्तर्य्युपमान इति णिनिः रणान्निरस्तः बहिष्कृत इत्यर्थः ॥२४॥

यमास्येत्यादि । तस्य रामस्य विक्रमं ताडका वेत्ति जानाति अहञ्च वेद्मि सा किम्भूता यमास्यदृश्वरी यममुखं दृष्टवती मृतेति यावत् चास्मिति दृशेः क्वनिप् नखखयादन इति ईप् रञ्च अहं किम्भूतः शूरम्मन्यः आत्मानं शूरं मन्यमानः मन्यात्मार्थे इति

ख्यश्चिन्नात् रले दिवसृतदेत्यादिना यन् तेन चिंहगर्हिना रणात् निरस्तः निराकृतः सिंह इव नर्द्दतीति मनोयायीतिवत् वेत्तीति लोकाक्षरस्था ताडका इदानीमपि जानातीत्यभिप्रायेण वर्त्तमाने क्तो वर्त्तमानसामीप्ये भूतेऽपि क्तीत्यन्ये रणादिति हेतौ पञ्चमी रणभूमेः सकाशात् वहिष्कृत इति वा ॥ २४ ॥

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ। अनुभूतोमया चासौ तेन चान्वभविष्यहं ॥ २५ ॥

नत्वमित्यादि। तेन रामेण त्वन्नान्वभाविष्ठाः त्वमनेन नानुभूतः कर्म्मणि लुङ् थासि स्यसिजित्यादिना चिण्वदिट् ष्ठुत्वं नान्वभावि त्वयाऽप्यसौ नानुभूतः येनैवमुच्यते अत्र चिण्भावकर्म्मणोरिति चिण् अनुभूतोमया चासौ चशब्दः पुनरित्यर्थे मया पुनरसावनुभूतः न शक्तोजेतुमिति तेन रामेण चान्वभविष्यहमनुभूतोऽहम् तेन सह योद्धुमक्षम इति अत्र चिण्वद्भावो न कृतः किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् तेन वृद्ध्यभावात् गुणएवेति ॥ २५ ॥

नत्वमित्यादि। त्वद्वचने कोग्रहः मत्प्रसिद्धैव सद्दूरीभविष्यति इत्याशङ्कायामिदमुक्तं तेन रामेण त्वं न अन्वभाविष्ठा न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्व्वोभूधातुः सकर्म्मकः कर्म्मणि थास् इनयद्दृशचइति पक्षे चिण् त्वयापि असौ रामो न अन्वभावि न अनुभूतः तेन तवावज्ञा न युक्ता कर्म्मणि टो तन् असौ मया अनुभूतः तथापि तस्याज्ञोऽहमिति मद्वचनं

दृष्टार्पितेति भावः तेनाप्यहमन्यभविषि अनुभूतः तेन भङ्गमनं खर्व्वं पराजितस्य मम दर्पेनेन नष्टावस्थाप्रसङ्गात् कर्म्मणि टी इण् मिथोरेभावपत्ति इम्॥ २५ ॥

अध्यङ् शस्त्रभृतां रामोन्यञ्चस्तं प्राप्य मद्विधाः। सकन्याशुल्कमभनक् मिथिलायां मखे धनुः॥ २६ ॥

अध्यङ्। शस्त्रभृतामध्ये रामोऽध्यङ् अधिकः अध्यञ्चत्याधिक्ये वर्त्तत इति ऋत्विगित्यादिना किन् तस्मिन् लुप्ते अनुनासिकलोपे उगिदचामिति नुम् तस्यानुस्वारपरसवर्णत्वे कृते च हल्ङ्यादिसंयोगान्तलोपौ नकारस्य किन्प्रत्ययस्यकुरिति कुत्वेन ङकारः तस्मादहम प्राप्य मद्विधा न्यञ्चो हीनाः निशब्दोऽत्राभावे वर्त्तते न्यञ्च इति पूर्व्ववत् किन् अनुनासिकलोपः नुम् हल्ङ्यादिलोपो नास्ति असत्त्वात् कुत्वञ्च नास्ति अपदसंज्ञत्वात् यो मिथिलायामहद्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात् शस्त्रभृतामध्यङ् भञ्जेर्लङि श्नान्नलोपः हल्ङ्यादिलोपः कुत्वञ्च कन्याशुल्कं कन्यामूल्यमत्र हि यो रौद्रमनुरारोपितगुणङ्करोति तस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम्॥ २६ ॥

अध्यङित्यादि। शस्त्रभृतां मध्ये रामो अध्यङ् आधिक्येन पूजितः कर्म्मणि किप् इस्तकलोपोऽणाविति प्राप्तनलोपस्य नेदित्पूजार्थयोरिति प्रतिषेधः विचप्रत्ययोवा चक्तिनि अञ्चोः पृथक् ग्रहणात् लुप् माकृकङ् बोर्नुः अपेञ्जमनौः स्यान्तस्य लुप् अध्यङ् अधिकोवा अधिपूर्व्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मद्विधा मत्स

रावणहननात् तेऽपि जानन्तीत्यर्थः गुपूरवणे वारेदिति आयो ऽभावः पक्षे ऋांचिः वेमूदिति पक्षे इम्॥ ३७॥

सुखजातः सुरापीतो नृजग्धोमाल्यधारयः। अधि लङ्कं स्त्रियोदीव्य मारब्धा बलिविग्रहं॥ ३८॥

सुख। यतएवन्द्दरूपस्थानः स तस्माद्बलिना रामेण विग्रह मारब्धाः माकार्षीः रभेराङ्पूर्व्वात् माङि लुङ् थास् झलोझ लीति सिज्लोपः झषस्तथोर्धोधः झलाञ्जशूझशि किन्नार्य्यमि त्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययीभावः स्त्रियोदीव्य क्रीड सोटि रूपम् दिवःकर्म्मचेति कर्म्मसंज्ञायां वाम्शसोरि तीयङ् कीदृशः सुखजातः जातं सुखमस्येति वहुब्रीहिः क्षता सवपानत्वात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः निष्ठायामदोजग्धिः पूर्व्ववद्बलम् एषु वाहिताग्न्यादिदर्शनात्प रनिपातः माल्यन्धारयतीति माल्यधारयः अनुपसर्गात् लिम्पे त्यादिना शः॥ ३८॥

सुखेत्यादि। रामोदुरूपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः माकार्षीः आङ्रभेष्टी थास् झलो झला दिति सिलोपः ढभान्तयोरिति थस्य धः अधिलङ्कं लङ्कायामधि कृत्य स्त्रियोदीव्य स्त्रीभिः क्रीड कारकार्थेऽव्ययीभावः दिवसुतु दैत्यादिना दिवः श्यन् र्व्यनपुतयोति र्घः हेर्लोपः दिवोधेवेति करणे द्वितीया कीदृशः सुखं जातमस्य सुरा पीता येन ना मनु ष्योजग्धोभक्षितोयेन स तथा एषु अन्याहिताद्दित्वात् क्ता

भस्य परनिपात इति परः स्वमते पूर्ब्बपरनिपातयोर्व्विवक्षा धीमत्त्वं दैवांशेऽन्वय इत्युक्तेः अघोऽदेयपिचेति अस्यादेशः माल्यानि धारयतीति साहिसातीति शः॥ ३८॥

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत। यातयामं विजितवान् सरामं यदि किन्ततः॥ ३९॥

तंभी। तम्मारीचम्पूर्व्वोक्तन्निराकुर्व्वन् रावणः प्रत्यभाषत प्रत्युक्तवान् लङि रूपम् भोतङ्कारमाक्रुश्य भीतङ्कृत्वा भीतोऽसीति कर्म्मण्याक्रोशे कृञः खमुञ् यातयामङ्गतवयसं यदि विजितवान् रामोदाशरथिः किन्ततः किं तापसः शूरः॥ ३९॥

तमित्यादि। भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे भीतंकारमिति कर्म्मण्याक्रोशे कृञो भाषणार्थे क्त्वा चणम् खिदचेति परः स्वमते तमाक्रुश्य प्रत्यभाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं योरणे दुष्पस्थान इत्यादेर्विज्ञापयितारं कृकङ्विज्ञाने इत्यस्मात् ञ्यन्तात् कभावेऽसीति कर्त्तरि घञ् किम्वा चणमित्यस्य योगविभागात् आक्रोशे चणम् मनीषादित्वात् पूर्व्वपदस्य दीकान्तत्वं किं प्रत्यभाषतेत्याह स राघवोयातयामं वृद्धं रामं जामदग्न्यं विजितवान् ततः किं नहि वृद्धजयेन शौर्य्य ख्यायते। यातयामस्तु जीर्णे स्यात् परित्यक्तोज्झितेऽपि चेति विश्वः॥ ३९॥

अघानि ताडका तेन लज्जाभयविभूषणा। स्त्रीज
ने यदि तच्छ्लाघ्यं धिग्लोकं तुच्छमानसं ॥ ४० ॥

अघा। तेन रामेण ताडका अघानि व्यापादिता हन्तेः क
र्मणि लुङ् लज्जा भयं च विभूषणं यस्याः स्त्रीलाज शौर्य्यम् एवं
विधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघ
नीयम् कृत्यानाङ्कर्त्तरिवेति तृतीया तं धिक् तं लोकं तुच्छमानसं
हीनमानसम् ॥ ४० ॥

अघानीत्यादि। लज्जा भयञ्च विभूषणं यस्याः सा ताडका
तेन रामेण अघानि मारिता हन्तेः कर्मणि टी रतनोर्यणिणो
खेर्हाघोञ्जितिचेति घत्वं स्त्रीजने तत्कर्म यदि श्लाघनीयं तदा
तुच्छमानसं हीनचित्तं लोकं धिक् धिक्समयेति द्वी ॥ ४० ॥

यष्टेह मर्हिममसौ शरैर्भीरुमभाययत्। कुमन्त्रायच
के रामो भवतां पौरुषं न तम् ॥ ४१ ॥

यष्टे। असौ रामोयज्ञघ्नमारीचं शरैरभाययत् भायितवान्
युगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरैभ्यो
भयम् नतु रामात् तत् किम्पौरुषम्पुरुषकारः किमसौ युवाह्निम
हण मेहैमर्दिनघ्नेहएवमर्दिनं पाषेषमिताहिलासः कुमन्त्रायञ्च
के कुत्सिता मन्त्राणः कुमन्त्राः कुःपापार्थे इति वः कुमन्त्राम
न्यतरस्यामिति समासान्तष्टच् तेषां कुत्सितो यज्ञः तस्मिन्मति

कुत्सायाष्टच् तेन भूरिकर्मीऽयं रणात्तेन निरस्तः इत्युपहास
युक्तम् ॥ ४१ ॥

यद्गृहत्यादि । अभौ रामः कुत्रहागवनके यद्गुवक्तां शरैरभा
ययत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलं
अतएव गेहेनर्दिनं खगृहएव नर्दतीति घहादित्वाखिन् पात्रे
समितादित्वात् क्षेपे समासो विभक्त्यलोपश्चेति परः भ्राययदि
ति भियोऽन्यन्तात् णौ खिभ्योर्धात्वर्थे णौ मश्वेत्यस्य भीर्भीष्
वेत्यस्य च नात्र विषयः यतः शरैरेव एवात्र भयं विवक्षितं नस्तु
प्रयोजकात्कर्तुः कुत्सितो ब्रह्मा ब्राह्मणः कुब्रह्मः ईशाद्ब्रह्मणः
कुमहद्भ्यामन्यतरस्यामिति पक्षे षः तस्य कुत्सितोऽयक्षः इति निन्द्यार्थो विभा
रसंधेत्यादिना कः अतएव प्रयोजनाभावात्तस्य मध्यमा पण्यता
न गच्छन्ति पुरुषस्य भावः कर्म वेति पूर्व्वेण ण्यः ॥ ४१ ॥

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः । किं
चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

चिर । यदि रामेण क्षत्रियकान्तिके कुत्सितक्षत्रियसमीपे
भग्नन्धनुः किन्तच्चित्रमाश्चर्य्यं क्षत्रिया जनकादयः तस्य कुत्साया
ष्टच् क्षत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय
पश्चात्सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी
किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरि
ति द्वितीयां विधाय अत्यन्तसंयोगेचेति द्वितीयासः जीर्णञ्च

रकालोषितत्वात् जृष्वयोश्चानो निष्ठा श्वतईङ्गतोः इकोश्चि चेति दीर्घः रदाभ्यामिति निष्ठानत्वम् कीटैर्घुणैर्निष्कुषितम्भ्रा दितं निरःकुष इत्यनुवर्त्तमाने इण्निष्ठायामितीट् ॥ ४२ ॥

चिरेत्यादि। क्षत्रियकान्तिके कुत्सितानां क्षत्रियाणां जनकादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं सदाप्यादि व्याप्ताविति द्वितीया तथा समासः तत एव जीर्णं जृजरायां श्वानो क्तः ऋदिरणावितोर् थ्यनचुतयोति दीर्घः ल्वाद्योदिति नकारः कीटैर्घुणैर्निष्कुषितं अन्तःखादितं नेमजीत्यादौ निष्कुषवर्ज्जनात् इम् चलविधानं गवाक्षजालैरभिनिष्पतन्त्य इत्यत्र व्याख्यातं ईदृग्धनुर्भङ्गश्लाघयैव क्षत्रियाणां कुत्सा ॥ ४२ ।

वनतापसके वीरौ विपक्षे गलितादरौ। किं चित्रं यदि सावज्ञौ मम्नतुः खरदूषणौ ॥ ४३॥

वन। वने तापसोवनतापसः कुत्सायां कन् तस्मिन् तापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयङ्करिष्यतीत्यभ्रूयैव योधितवन्तौ खरदूषणौ यदि मम्नतुः मृतौ कोदोषः किञ्चित्रं म्रियतेर्लुङ्लिङोश्चेति नियमात् लिट्यात्मनेपदन्न भवति ॥ ४३ ॥

वनेत्यादि। खरदूषणौ यदि मम्नतुः तदापि किञ्चित्रं नैवाश्चर्य्यमित्यर्थः तपःशीलस्तापसः वने कुत्सितस्तापसो वनतापसको रामस्तस्मिन विपक्षे किमयं करिष्यतीति मत्वा गलितादरौ

वीरावपि सावद्यौ विपक्षादराभावात् युद्धेऽपि सावद्देशौ न्हक्‌ष्टीक्षेममिति नियमात् नवश:पमे इति ञितोऽन्यत्वात् था: परस्मैपदं ॥ ४३ ॥

त्वञ्च भीरुः सुदुर्व्वुद्धे नित्यञ्च रणकाम्यसि। गुणांश्चापकृषेऽस्माकं स्तौषि शत्रूंश्च नः सदा ॥ ४४ ॥

त्वञ्च। हे दुर्व्वुद्धे त्वम्पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायाङ्काम्यच् अस्माकञ्च सतो गुणानपकृषे अपनयसि कृञ् अपनये आदादिकः ङित्त्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतेः उतो वृद्धिर्लुकि हलि ॥ ४४ ॥

त्वञ्चेत्यादि। हे दुर्व्वुद्धे मारीच त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च त्वं:काम्यक्त्वेच्छायां भीरोर्युद्धेच्छाऽनुचितैव युद्धे पराजयोऽवश्यं एवमस्माकं गुणांश्चापकृषे शौर्य्यादीन् अपनयसि कृञ्त्वचौर्य्ये सदा नोऽस्माकं शत्रून् स्तौषि टुञ्स्तुतौ रपिद्दुस्तुतोऽद्देर्भिः ॥ ४४ ॥

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्द्धनं। कारयिष्यामि वा कृत्यं विजिघृत्सुर्व्वनौकसौ ४५ ॥

शीर्ष। यत एवम्विधस्त्वन्दुष्टः अतोऽहं त्वामौद्वितीयाया दृष्ट्यामिकलचणेन त्वादेशः शीर्षच्छेद्यं शीर्षच्छेदार्हं शीर्षच्छेदाद्यत्

चितिवर्द्धनं करोमि शिरश्छित्वा व्यापादयामीत्यर्थः अथवा कृत्यं करणीयं विभाषाकृवृषोरिति क्यप् कारयिष्यामि हृक्रोरिति द्विकर्म्मकता विजिघृक्षु: विग्रहीतुमिच्छु: सनिग्रहगुहोश्चेतीट् प्रतिषेधः रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना सम्प्रसारणम् होढः एकाचो वशोभष् षढोःकःसि वनौकसौ रामलक्ष्मणौ वनमोकोगृहं ययोः नलोकेति कर्म्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥

शीर्षेत्यादि। अतः कारणात् अस्मद्गुणापह्नवात् शत्रुस्तव कार्य्य शीर्षच्छेद्यं शीर्षच्छेदाहं त्वां चितिवर्द्धनं मृतं करोमि शिरश्छित्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे ढघेकादिति यः किम्वा छिदेर्ण्यण् शीर्षे छेद्यः शीर्षं छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवनेच्छास्ति तदा मत्कृत्यं कुर्व्वितिभावः कृवृषमृजेति पक्षे क्यप् ग्रोऽणौ णेरिति प्रयोज्यकर्त्तुः पक्षे कर्म्मत्वं वनमेव ओको ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुरहं ग्रहेः सन् नेमुगुहग्रह इति इम्निषेधः ग्रहज्यपश्चांजिः॥ ४५॥

तमुद्यतनिशातासिं प्रत्यवाच जिजीविषुः। मारीचोऽनुनयंस्त्रासादभ्यमित्त्यो भवामि ते॥ ४६॥

तमु। तं रावणं एवमुक्तवन्तं निशात इति शाच्छोरन्यतरस्यामितीत्वाभावपक्षे रूपं उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तम्मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्त्योभवामि

ते अमित्रस्याभिमुखमभ्यमित्रमाभिमुख्येऽव्ययीभावः अभ्यमित्र मलङ्गामीत्यमित्रर्थे अभ्यमित्राच्छ चेति चकाराद्यत्खौ चेति यत् त्वदमित्राभिमुखङ्गामीत्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितुमिच्छुः ॥ ४६ ॥

तमित्यादि। मारीचो जिजीविषुर्जीवितुमिच्छुः सन् त्रासात् अनुनयन् तं रावणं प्रत्युवाच त्रासहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति छाशोर्वेति श्यतेः पक्षे न क्तिः किं प्रत्युवाचेत्याह अहं तेतव अभ्यमित्यः शत्रभिमुखगामी भवामि अमित्रस्य अभिमुखं अभ्यमित्रं आभिमुख्येऽव्ययीभावः अभ्यमित्र शब्दादिदं गच्छतीत्यर्थे विकारसंघेति यः ॥ ४६ ॥

हरामि रामसौमित्री मृगोभूत्वा मृगयुवौ। उद्योगमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु ॥ ४७ ॥

हरा। अहमृगोभूत्वा रामसौमित्री हरामि देशान्तरम्प्रापयामि आखेटकाभिरतत्वात् यदाह मृगयुवौ मृगैर्दीव्यत इति क्विप् च्छ्वोःशूडनुनासिके चेति चकारात् कौ च ऊठ् यणादेशः उवङ् मृगयुनाविति पाठान्तरम् तत्र युअभिगमने मृगान् यौति अभिगच्छतीति क्विप् त्वञ्च यथेष्टं यथारुचि तमुद्योगं सन्तनु विस्तारकुर्व्वित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छ चेति चकाराद्यत्खौ चेति खः ॥ ४७ ॥

हरेत्यादि। उपायं दर्शयन्नाह अहं मृगोभूत्वा रामसौ मित्री हरामि अन्यत्र नयामि यतस्तौ मृगयुवौ मृगयारसिकौ मृगैर्दीव्यत इति क्विपि छ्वोःशूडाविति वलोट् धोरियुवचि मृग द्युताविति पाठे द्युलभिसर्पणे इत्यस्मात् क्विपि स्वस्यतन्पितीति तत् मृगाभिगामिनावित्यर्थः ततस्त्वमपि अभ्यमित्रीणायचेष्ट मुद्योगं सन्तनु तनदुन्विस्तारे हेर्लोपोऽस्योप्योरिति हिलोपः अभ्यमित्रीण इति अभ्यमित्व्यवत् ॥ ४७ ॥

ततश्चित्रीयमाणोऽसौ हेमरत्नमयोमृगः। यथा मुखीनः सीतायाः पुप्लुवे बह्व लोभयन् ॥ ४८ ॥

ततः। उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेम रत्नमयः रत्नञ्च हेमचेति विगृह्य मयड्वैतयोर्भाषायामिति वि कारे मयट् निर्मलत्वात् सीताया अग्रतो यथामुखीनः प्रति बिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमतिस्म इवशब्दलोपोद्रष्टव्यः यथा मुखन्दर्शनमिति यथामुखसम्मुखस्य दर्शनः खः बह्व लोभयन् सुष्ठु स्पृहाञ्जनयन् यतश्चित्रीयमाणः आश्चर्य्यम्भवन् हेमरत्न मयत्वात् नमोवरिवइत्यादिना क्यच् चित्रङ्आश्चर्य्ये ङकार स्यात्मनेपदार्थत्वात् शानच् अवयवकृतं लिङ्गं समुदायस्य भव तीति ॥ ४८ ॥

ततइत्यादि। ततोवचनानन्तरं असौ मारीचो मायया हेम रत्नमयोमृगः सन् सीतायायथामुखीनोऽग्रतः स्थायी भूत्वा बह्व

लोभयन् चक्षुःस्पृहां जनयन् प्लुवे भ्रमतिस्म भुङ्गती ठी चित्रं करोतीति चित्रीयमाणः चित्रङ्श्चार्य्ये कण्ड्वादित्वात् यक् ङित्वादात्मनेपदं हेम रत्नञ्च प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट् वाऊल्यात् विकारइत्येके मुखस्य सदृशं यथामुखं दर्पणादिस्थ प्रतिविम्बमुच्यते सादृश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छ तया यथा मुखं दृश्यतेऽत्रेति विकारसंघेत्यादिना तदत्र दृश्यते इत्यर्थे ईनःवस्तुतस्तु उपचारात् यथामुखीनशब्दोऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखोऽभूदित्यर्थः ॥ ४८ ॥

तेनादुद्यूषयद्रामं मृगेण मृगलोचना। मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनं ॥ ४९ ॥

तेना। तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितु मिच्छन्तमप्रयुक्तवती गृह्यतामयमिति इवन्तस्य दिवेः सनीवन्तेत्या दिना यदा नेट् तदा च्छ्वोःशूठ् द्विर्व्वचनम् तस्मात्सनन्तण्य न्तात् लुङि रूपम् मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपदलोपी सः विपुलोरस्कं विस्तीर्णवक्षस्थलमुरःप्र भृतिभ्यः कप् किमर्थमदुद्यूषयत्मृगाजिनम्मृगचर्म्म प्रावुवूर्षुः प्राव रितुमिच्छुः प्राङ्पूर्व्वस्य वृङ इट्सनिवेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्यपूर्व्वस्येत्युत्वम् रपरत्वं र्वोरुपधायादीर्घ इकः द्विर्व्वचनम् इणकोरिति षत्वम् रेफस्येण्ग्रहणेन ग्रहणाद्व य्योष्ठ्योऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥

तेनेत्यादि। मैथिली मृगाजिनं मृगस्य चर्म्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामं चदुचूषयत् क्रीडितुमिच्छामकारयत् द्विवेः सन् भ्रस्जश्रिस्वृयूर्णुभरदरिद्रेत्यादिना पचेऽनिम् पूर्वान्निमीति गुणाभावे छ्वोः शूटाविति वस्य ऊत्वं ततोद्वित्वं ञिः प्रेरणे दिवेरकर्म्मकत्वात् घोञ्ञेरिति प्रयोज्यकर्त्तुः कर्म्मत्वं सा कीदृशी मृगस्येव लोचने यस्याः सा तथा रामं कीदृशं विपुलं प्रकीर्णमुरोवक्षःस्थलं यस्य तं उरःप्रभृतितः कोवङ्गीर्षाविति परः स्वमते स्वार्थे कः प्रावुवूर्षुरिति वृञ्वरणे सन् घौऽज्झनिङ्गमां स्याद्दृदुरिति पचेऽनिम् दन्त्योष्ठ्यस्यापोष्ठ्यकार्य्यत्वात् ऋदिरणावूर्लौष्ठ्यादिति उर् र्व्यनचत्वयोति र्घः ॥ ४९ ॥

योगक्षेमकरं कृत्वा सीतायां लक्ष्मणं ततः। मृगस्यानुपदी रामो जगाम गजविक्रमः ॥ ५० ॥

योग। ततोदुच्छूपानन्तरं रामोजगाम योगक्षेमौ शरीरस्थितिपालने करोतीति कृञोहेत्वित्यादिना हेतौ टः यद्दणवता तदन्तविधेरभावात् क्षेमप्रियमद्रेण्चेत्यण्खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणं कृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात्साधुः गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः ॥ ५० ॥

योगेत्यादि। ततोऽनन्तरं लक्ष्मणं ज्ञानक्या योगक्षेमकर

हत्वा गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनो वा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः तौ करोतीति स्वकृष्टः अनुपदं यातीति बाहुल्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैका जादिति इन् अन्वेष्टर्य्यनुपदादिनिति परसूत्रं ॥ ५० ॥

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित्।
वीक्षमाणोमृगं रामश्चित्रवृत्तिं विसिस्मिये॥५१॥

स्थायम्। मृगश्चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणोरामो विसिस्मिये विस्मितः स्मिङोङित्वादात्मनेपदं षोपदेशत्वाभ्या से णः परस्य सस्य षः चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित्प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्यो त्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुति क्त्वाप्रत्ययेणमुलो द्विर्वचनञ्च ॥ ५१ ॥

स्थायमित्यादि। मृगं वीक्षमाणो रामो विषिष्मिये विस्मितः स्मिङश्चा रूपं षोपदेशत्वात् खरित्वात् षत्वं अभ्यासादितीयः विस्मये हेतुमाह चित्रवृत्तिं आश्चर्य्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं णमुल्णाभीक्ष्ण्येपूर्व्वकाले इति णमुल् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति स्मारं स्मारं नमसीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमो घ्रो वेति पक्षे दीर्घः ॥ ५१ ॥

चिरं क्लिशित्वा मर्म्माविद्रामोविलुभितप्लवं। शब्दा
यमानमव्यात्सीत् भयदं चणदाचरं॥ ५२॥

चिरम्। रामः चणदाचरमारीचमव्यात्सीत् विद्धवान् व्यधे
र्लुङि हलन्तलचणावृद्धिः मर्म्माविद्रामः मर्म्माणि विध्यतीति क्विप्
नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तङ्का
लमायस्य अत्यन्तसंयोगे द्वितीया क्लिशः क्त्वानिष्ठयोरिति विक
ल्पेनेट् तत्र रलोव्युपधादिति कित्त्वविकल्पे मृडमृदेत्यादिना
कित्त्वं विलुभितप्लवं व्याकुलितगमनं लुभोविमोहन इतीट् विमो
हनं व्याकुलीकरणम् शब्दायमानं शब्दङ्कुर्व्वाणं शब्दवैरेति
क्यङ् भयदन्निशाचरं शब्दविशेषणं वा॥ ५२॥

चिरमित्यादि। रामश्चिरकालं क्लिशित्वा श्रान्तोभूत्वा
भयदायकं चणदाचरं तं राचसं अव्यात्सीत् व्यधीताडे टी
पूक्लिशुदितइम् इति क्लिशेः पचे इम् सेमचुधेत्यादौ क्लिशवर्ज्ज
नात् न गुणः मर्म्माणि विध्यतीति क्विप् जिः वीरुद्दोधङ्क्वाविति
दीर्घनिर्द्देशात् क्वचित् क्विवन्ते पूर्व्वपददीर्घत्वं स्यादिति सूचितं
आङ्पूर्व्वस्य रूपं वा मर्म्मावित् मर्म्मज्ञोवा वेत्तेरूपं विलुभितप्लवं
मर्म्मताडनात् व्याकुलगतिं लुभश्चविमोहने विमोहनं व्याकुलीक
रणं चुधवसपूजेत्यादिना इम् शब्दायमानं शब्दं कुर्व्वाणं शब्द
सुखकष्टादेरिति क्यः भयदमिति मृगस्य शब्दक्रियाया वा विशे
षणं॥ ५२॥

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी। मत्वा
कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत्॥ ५३॥

श्रुत्वा। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फूर्जावज्रनिर्घोषे ड्वितोऽथुच् निनादं शब्दं गोगदनदेति विकल्पनात् पक्षे घञ् श्रुत्वा मैथिली कष्टश्रितं कष्टमाप्तं रामं द्वितीयाश्रितेत्यादिना सः मत्वा बुद्धा कष्टप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवनशीला शङ्कमाना सम्पृचानुरुधेत्यादिना घिनुण् सौमित्रिञ्च न्तुमैजिहत् ईहाञ्चकारितवती ईहेर्णन्तात् लुङि द्विर्वचनेचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् अभ्यास कार्य्यञ्च ॥ ५३ ॥

श्रुत्वेत्यादि। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला अर्थात् सीता सौमित्रिं गन्तुं ऐजिहत् चेष्टामकारयत् ईहङ्चे ष्टायां णिःप्रेरणे अङि चेदित्वं ट्वोस्फूर्जावज्रनिर्घोषे दीर्घवानि त्येके ड्वितोऽथुर्भावे ॥ ५३ ॥

एष प्राबृषिजाम्भोदनादी भ्रातावरौति ते। भ्रा
तेयं कुरु सौमित्रे भयात्त्रायस्व राघवं ॥ ५४ ॥

एष। एष ते भ्राता रौति उतोवृद्धिरित्यौकारः प्रावृषि जातः प्रावृषिजः सप्तम्याञ्जनेर्डः प्रावृडित्यादिना सप्तम्या अलुक् सचासौ अम्भोदश्चेति विशेषणमिति सः तद्वन्नदतीति कर्त्तर्य्युपमाने णिनिः तस्मात्सौमित्रे भ्रातेयं भ्रातिभावन्तत्कर्म्म वा कुरु कपिज्ञा त्योर्ढक् तेन भयात्त्रायस्व राघवम् ॥ ५४ ॥

एषइत्यादि। हे सौमित्रे एष ते तव भ्राता विरौति शब्दायते हलध्वनौ रपिह्लुतोऽहेर्म्मिः प्रावृषि वर्षाकाले जातः प्रावृषिजः हनजमादिति डः शरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं अम्भोददातीति अम्भोदः पूर्व्ववत् डः प्रावृषिजश्चासौ अम्भोदोमेघश्चेति सइव नदतीति यद्वादित्वात् त्वम् त्वं भ्रातेयं भ्रातिकर्म्म कुरु किमर्थमित्याह भयाद्राघवं चायस्व विकारसंघेत्यादिना कर्म्मण्यर्थे भ्रातेः ष्णेयः॥५४॥

रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषोः। रामस्वनितसङ्काशः स्वान इत्यवदत्स तां॥५५॥

राम। रामसङ्घुषितं रामशब्दितमेतन्न भवति घुषिरविशब्दार्थः तस्य निष्ठायां रुष्यमत्वरेत्यादिना विकल्पेनेट् मृगस्य विवञ्चिषोः छलयितुमिच्छोः वञ्चु गतौ भौवादिकः तस्यानेकार्थत्वात् प्रलम्भनइति चौरादिकस्याण्यन्तस्य वा प्रयोगः येषामनित्यण्यन्ताश्चुरादयइति दर्शनं तेषां मतेनापि सिध्यति एष स्वानोध्वानः स्वनहसोर्वेति पचे घञ् कीदृशः रामस्वनितसङ्काशः रामशब्दानुकारीति तां सीतां एवमवदत् उक्तवान् सलक्ष्मणः॥५५॥

रामेत्यादि। सलक्ष्मणस्तां सीतां इत्यवदत् किमित्याह एतन्न रामसंघुषितं घुषरवे विवञ्चिषोर्व्वञ्चयितुं छलयितुमिच्छोर्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः वञ्चकङ्वञ्चने किंस्यात् चौरादिकः वञ्चनं प्रलम्भनं चुर्भ्योञिर्व्वेति ग्यभावपचे

रूपमिदं केचित्तु वध्यगत्यां चौरादिकोधातोरनेकार्थत्वात् प्रक्ष अनेऽपि वर्त्तत इत्याहुः खनशब्दे भावे क्ते खनितं घञि खानः ॥ ५५ ॥

आप्यानस्कन्धकण्ठांसं रुषितं सहितुं रणे। प्रोर्णुवन्तं दिशोवाणैः काकुत्स्थं भीरु कः क्षमः॥ ५६ ॥

आप्या। प्यैङ्वृद्धौ अस्मादाङ्पूर्व्वात्संयोगादेरातोधातोर्य्यण्वत इति निष्ठातोनः ओप्यायीवृद्धावित्यस्य वा रूपम् ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्व्वस्य त्वन्धूधसोरिति वचनात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य काकुत्स्थस्य वाहुशिरोंऽसः तस्य पश्चिमोभागः स्कन्धः तं रुषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु कातरे कः क्षमः शक्तः अपि तु न कोऽपीत्यर्थः क्षमेः शक्तोत्यर्थत्वात् तदुपपदे शकधृषेत्यादिना तुमुन् तीषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं काकुत्स्थः शिवादिभ्योऽण् कस्मान्न क्षमइत्याह प्रोर्णुवन्तन्दिशोवाणैः यतः सर्व्वा दिशः वाणैः छादयन्तं ऊर्णोतेः शतरि उवङ् क्षमत इति क्षमः पचाद्यच् ॥ ५६ ॥

आप्यानेत्यादि। हे भीरु कातरस्वभावे रणे रुषितं क्रुध्यन्तं काकुत्स्थं रामं सहितुं अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः तेमसहलुभइत्यादिना उभयत्र पक्षे इम् क्षमेः पचादित्वादन् ककुत्स्थस्यापत्यं इति शिवादित्वात् ष्णः आप्यानं स्थूलं स्कन्धकण्ठांसं यस्य तं ओप्यायीङ् वृद्धौ ओदित्त्वात् स्वादिभ्यइति क्तस्य नकारः ध्योर्लोपोऽक्षये इति यलोपः आङोऽन्धूधसोरिति निय

मात् न प्यादेश: मेदुरदुरविलम्ब रूपं वा संयोगभिर: वासो र्दिश: पोर्णुवन्तं आच्छादयन्तं ॥ ५६ ॥

देहं बिभ्रज्जुरस्लाघौ मृगः प्राणैर्दिदेविषन्। ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया ॥ ५७ ॥

देहम्। एष मृगोराममायात् आगतवान् यातेर्लङि रूपम् किमर्थं देहं शरीरं अस्लाघौ असौ अशाविव बिभ्रज्जुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्द्धेत्यनेडभावपक्षे स्कोःसंयोगाद्योरित्यनेन सलोपे पत्वकुत्वयोश्च रूपम् प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः कर्म्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट् पक्षे रूपम् ज्यया गुणेन घुष्टौ निघृष्टौ ततएव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणा यस्य घुषिरविशब्दनइति निष्ठायामनिट् मुमूर्षयः मर्तमिच्छया मृङः सनि उदोष्ठ्यपूर्व्वस्येत्युत्वम् अः प्रत्ययात् ॥ ५७ ॥

देहमित्यादि। एष मृगोमुमूर्षया मर्त्तुमिच्छया राममायात् आगच्छत् प्राप्तवान् यो मृङः सनि यौऽज्झनिङ्गमामिति दीर्घे उदृदरणाविति उर् रामस्य अस्त्रमग्निरिव तच स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जश्रिस्वृयूर्णुभरइति इमोऽभावपक्षे स्यादेः सोलोपः शच्छ्राजिति षङ् षढोःकःसि प्राणैर्दिदेविषन् क्रीडितुमिच्छन् इवन्तत्वात् पूर्व्वेण पक्षे इम् ज्याघुष्टोधनुर्गुण निष्पिष्टः कठिनाङ्गुष्ठोयस्य तं रामं घुषशब्दे क्षुब्धबाढेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्टः शब्दितः सुप्रसिद्धः कठिनाङ्गुष्ठोयस्येति ॥ ५७ ॥

अत्रून् भीषयमाणं तं रामं विस्मापयेत कः । मास्म भैषीस्त्वमद्यैव कृतार्थोऽद्रक्ष्यते पतिः ॥ ५८ ॥

अत्रून् । तं रामं अत्रून् भीषयमाणमभीतान् कुर्व्वाणं भियो हेतुभये षुक् भीस्म्योर्हेतुभयइति तङ् विस्मापयेत कः क्षुभितचित्तं कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् अर्त्तीत्यादिना पुक् निमन्त्रणे नियोगे वा लिङ् पूर्व्ववदात्मनेपदं तस्मात् मास्म भैषीः माभूर्भीता स्मोत्तरेलङ्चेति चकारात् लुङ् सिचि वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्द्रक्ष्यते दृशेः कर्म्मणि लृट् ॥ ५८ ॥

अत्रूनित्यादि । अत्रून् भीषयमाणं भीतान् कुर्व्वाणं रामं को विस्मापयेत क्षुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभ्योर्घाञ्चर्य्ये मस्त्रेति स्मिधातोरिकार आ मञ्च भीर्भीष्विति भियः षत्वे भीषादेशः तस्मात् त्वं मा भैषीः भयं न कुरु माङ्गेनघोऽप्याविति टीप्रत्ययदेनि सिः माङ्योगे अमागमाभावः त्वया अद्यैव कृतार्थः कृतकृत्यः पतिर्द्रक्ष्यते दृशः कर्म्मणि तौ वर्द्धोऽकिज्भ्वदति रेफः ॥ ५८ ॥

यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च । इच्छुः कामयितुं त्वं मामित्यसौ जगदे तया ॥ ५९ ॥

याया । तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः कामप्रवेदने कच्चिति इत्यकच्चित्युपपदे लिङ् न च गन्तुमुत्सहसे अक

धृषेति तुमुन् तस्मात्त्वनमाक्रामयितुमिच्छुः एषणशीलः समान कर्तृकेषु तुमुन् विन्दुरिच्छुरिति निपातनात्साधुः इत्येवमसौ लक्ष्मणो जगदे गदितस्तया सीतया ॥ ५८ ॥

याया इत्यादि। त्वं रामान्वेषणाय यायाइति मे मम कामोऽभिलाषः कामोऽकच्चितीति स्त्री नतु गन्तुं उत्सहसे तस्मात्त्वं मां कामयितु इच्छुः इच्छतीति इच्छुः विन्दिच्छुइति निपातः कमच्छतीगुपूधूपेति कमर्णिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्मणि ठौ ॥ ५८ ॥

मृषोद्यं प्रवदन्तीं तां सत्यवद्योरघूत्तमः। निरगात् शत्रुहस्तं त्वं यास्यसीति शपन् वशी ॥ ६० ॥

मृषे। माक्रामयितुमिच्छुरित्येतन्मृषोद्यम् मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात्सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमोलक्ष्मणः शपन् शत्रुहस्तं त्वं यास्यसीति शापमयच्छन् भौवादिकोऽत्र शपिर्न दैवादिकः निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्योरुपसंख्यानमित्यप् सयस्यास्ति सवशी जितेन्द्रियः अतएव सत्यवद्यः अवितथवादी शत्रुहस्तं यास्यसीति सत्यं वदतीति सत्यसुटोवक्तव्यमिति कर्त्तरि यत् वदःसुपि क्यप्चेति चकाराद्यत् भावे वा यतं विधायाच् अर्शआदित्वात् ॥ ६० ॥

मृषोद्यमित्यादि। त्वं शत्रुहस्तं यास्यसीति तां सीतां शपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणोनिरगात् निर्गतः इणगतौ

गाथ्यां भूस्येति मेर्लुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्या वादं प्रवदन्तीं मृषोपपदे वदेर्नित्यं क्यप् लेर्व्वदःक्यप्याविष्य म न्तरं मृषोद्यं नित्यमित्युक्तं यश्च स्वपाद्योरिति जिः सत्यं वदतीति छद्वोः कभावइत्युक्तेः कर्त्तरि यः सत्यवद्यः लेर्व्वदःक्यप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्शआदित्वादद्वा सत्यं वद्यं अस्येति वक्रीहिर्व्वा यद्वा वदनं वत् वदस्यैर्थे क्विप् विकारसंथे त्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वशइन्द्रियसंयमः सोऽस्यास्तीति नैकाजादिति इन् अतएव सत्यवद्यः॥ ६०॥

## कुलकं।

गते तस्मिन् जलशुचिः शुद्धदन्नावणः शिखी। जञ्ज पूकोऽक्षमालावान् धारयो मृदलावुनः॥ ६१॥

गते। तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्य माणेन सम्बन्धः कीदृशः जलशुचिः स्नातइत्यर्थः शुद्धदन् निर्म्म लदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य दन्नादेशः शिखा अस्यास्तीति शिखी परिव्राजकः व्रीह्यादित्वादिनिः जञ्ज पूकः पापाश्रयत्वात् गर्हितञ्जपतीति लुपसदेति यङ् जपजभे त्यभ्यासस्य नुक् यजजपदशां यङ इत्यूकः अक्षमालावान् अक्ष सूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः कस्य मृदलावुनः नञ्जिलम्बेर्नलोपश्चेत्यौणादिकऊकारे प्र त्यये अलावूः तस्य विकारः फलमिति ओरञ् तस्य फले लुक्

नपुंसकह्रस्वत्वम् मृत्पूर्वमलाबु इति मध्यपदलोपी सः कृद्योगे कर्म्मणि षष्ठी इकोऽचि विभक्ताविति नुम् ॥ ६१ ॥

गतेत्यादि। तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः कीदृशः अम्बुशुचिः अम्बुना जलेन शुचिः स्नातत्वात् शुद्धा निर्म्मला दन्ता यस्येति शुद्धदन् निपातनात् शिखी शिखायुक्तः नैकाजादिति इन् पापाश्रयत्वात् गर्हितं जपतीति जञ्जपूकः गत्यर्थात् लुपसदेत्यादिना यङ् जमजप जभेति सेनुम् जागृयङन्तयजजपेति ऊकः यङोलुक् अक्षमालावान् अक्षसूत्रयुक्तः मृदलाबुनोधारयः धारयतीति आदिहातिचेतीति शः ढे षी मृच्च अलाबुश्च इति समाहारद्वन्द्वे चर्मे कथं क्लीवं मृत्पूर्वमलाबु मृदलाबु वा भवेदलाबुरालाबुरालाबु कुम्बदलाबुषिति शब्दभेदः अलाबुस्तुम्बिफलं मृत्तीर्थमृत्तिका ॥ ६१ ॥

कमण्डलुकपालेन शिरसा च मृजावता संवस्य लाक्षिके वस्त्रे मात्राः संभाण्ड्य दण्डवान् ॥ ६१ ॥

कम। कमण्डलुना कपालेन च जातिरप्राणिनामिति द्वन्द्वे एकवद्भावः मृजावता निर्म्मलेन शिरसा च उपलक्षित इत्थम्भूते तृतीया संवस्य परिधाय वस्त्रसमाच्छादने इति मुण्डमिश्रेत्यादिना णिच् लाक्षिके वस्त्रे लाक्षया रक्ते लाक्षारोचनेत्यादिना ठक् मात्राः कमण्डल्वादिकान् सम्भाण्ड्य समाचित्य राशीकृत्येत्यर्थः

भाण्डात्समाचयनइति पुरुभाण्डेत्यादिना णिङ् दण्डवान् गृहीतचित्रदण्डः संसर्गे मतुप् ॥ ६२ ॥

कमेत्यादि। कमण्डलुश्च कपालोभिक्षापात्रञ्चेति समाहार द्वन्द्वः तेन उपलक्षितः केचित्तु कं जलं पालयतीति कपालः कमण्डलुश्चासौ कपालश्चेति कर्मधारयः तेन उपलक्षितः परिव्राजकोहि दक्षिणकरे सजलं पात्रं धारयतीति भावइत्याहुः मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः मृजूषशुद्धौ षित्त्वात् भीषिचिन्तीत्यादिना ङः स्त्रीलिङ्गत्वञ्च विशेषणे तृतीया काषिके वस्त्रे संवस्य परिधाय णिःकर्त्रादेरिति वस्त्रात् समाच्छादने परिधाने च णिः संपूर्व्वस्यैव तदभिधानशक्तिः प्रकृत्यर्थ परित्यागस्तु धातोः स्वभावात् यदुक्तं विशेषकर्म्मसम्बन्धात् प्रकृतेस्तु गतार्थतेति काषाया रक्ते काषिके विकारसंघेत्यादिना तेन रक्तेऽर्थे ष्णिकः मात्रां परिच्छदं कमण्डलुप्रभृतिं संभाण्ड्य समाचित्य सुखवहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्व्ववत् णिः प्रकृत्यर्थत्यागः संपूर्व्वतानियमस्य मात्रा कर्णविभूषणी। अक्षरावयवे वृत्ते मात्रेऽल्पे च परिच्छदे इति विश्वः दण्डवान् गृहीतदण्डः ॥ ६२ ॥

अधीयन्नात्मविद्विद्यां धारयन्मस्करिव्रतं। वदन् वक्राङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन् ॥ ६३ ॥

अधी। मा कुरुत कर्म्माणि शान्तिर्व्वः श्रेयसीत्येवं वाचयन्ति ये ते मस्करिणः परिव्राजकाः तेषामेतद्व्रतमसौ धारयन्

मस्करमस्करिणाविति परिव्राजके सुट् आत्मविदां योगिनां विद्यामुपनिषदमधीयन् जपन् इङ्धार्य्योरिति इङोधारेश्च अकृच्छ्रवति कर्त्तरि शतृप्रत्ययः अन्तरा वक्र प्रभूतं वदन् अङ्गुलिस्फोटमुनः स्फोटिकान्ते भूक्षेपश्च विलोकयन् भुवावुत्क्षिप्योत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गेभुवइति णमुल् ॥ ६२ ॥

अधीत्यादि। आत्मविदां योगिनां विद्यामुपनिषदं अधीयन् पठन् धारीङोरकृच्छ्रेशतृरिति परस्मैं स्मृति क्वचिदभिधानात् आत्मनेपरस्मैपदिनोः परस्मैपदात्मनेपदिता मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलीस्फोटं अङ्गुलीं स्फोटयित्वा वक्र वदन् मितभाषितया वक्र हस्तसंज्ञयैव वदतीति भावः भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् ऋजुतया कटाक्षाद्यभावइत्याशयः उभयत्र पोष्यमाणात्स्वाङ्गाण्णमिति परः वक्र अङ्गुलेः स्फोटो यत्र वदनक्रियायां भ्रुवोः क्षेपोयत्र विलोकनक्रियायां स्फोटक्षेपौ घञन्तौ ॥ ६३ ॥

संदिदर्शयिषुः साम निजुन्हुषुः क्षपाटतां। चंक्रमावान् समागत्य सीतामूचे सुखाभव ॥ ६४ ॥

संदि ॥ इह भयमाभूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् वक्रङ्गुलिस्फोटमिति योज्यं दृशेर्ण्यन्तसनन्तस्वेक्षपं क्षपाटतां राक्षसत्वंनिजुन्हुषुर्निन्होतुमिच्छुः धारयन्मस्करिव्रतमिति योज्यम् न्होतेरजन्तगमांसनीति दीर्घः कुटिलं क

मणयङ्क्रमा क्रमेर्नित्यं कौटिल्ये गताविति यङ् नुगत इत्यभ्यासस्य नुक् अःप्रत्ययादित्यकारः अतोलोपः यस्य हलः टाप् सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीता मूचे किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः यदहमार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्य इति कृभ्वस्ति योगे डाच्॥ ६४॥

सन्दीत्यादि। साम सान्त्वं संदर्शयितुमिच्छुः इत्यभिर्स्यस्मात् सन् चपाटतां राक्षसभावं निक्रोतुमिच्छुः गुडलर्षायां सनि धो:ऽज्झनिङ्क्रमामिति घः चंक्रमावान् कुटिलगतियुक्तः अमेध्यादि खलपरिजिहीर्षया चित्तकृत्यं वा कौटिल्यं गत्यर्थात्कुपेति यङ् ञमजपेति खेर्नुण् यङोलुक् ग्रस्वादः ततोवतुः ईदृशः सन् समागम्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सप त्रनिष्प्रत्रेत्यादिना सुखादानुकूल्ये डाच् यद्यप्यत्र तीयसम्ववोजे त्यादिसूत्रात् कृञीत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् च्विः कृभ्वस्त्यभूततद्भावइति सूत्रात् कृभ्वस्तित्ययस्यानुवर्त्तनं बोध्यं प्रयोगदर्शनात् हत्तौकृञीति लिपिकरप्रमादात् वाऊञार्थं वा किम्वा सुखं विद्यते यस्मादित्यर्शआदित्वात् अः ततश्चाप्॥ ६४॥

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीं। का
न्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता॥ ६५॥

सायम्। कालमिति वक्ष्यमाणेन सम्बन्धः सायन्दिवासामन्त्र भवाङ्कान्तिम् यदा येऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा

सायश्चिरेति ट्युट्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायंशब्दोऽमकारान्तः तदाप्यव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रणः चन्द्रमसः पञ्चदश कलाः तासां वृद्धि ह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेऽपीति णत्वम् एरनेकाच इति यणादेशः पङ्कजा नाञ्च कान्तिं कीदृशीन्दिवातनीन्दिवाभवां कान्त्या त्वदीयया स दातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्त न्याश्च सदाभवत्वात् जिह्रीतेरर्त्तीत्यादिना णौ पुक् शुचिस्मिता शुभ्रहासा ॥ ६५ ॥

सायमित्यादि। का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः तिथिप्रणश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्क जानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्ती लज्जयन्ती कीदृश्या सदातन्या सर्व्वकालस्थितया चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठतीति लज्जाहेतुः पञ्चदशतिथीः प्रणयति प्रव र्त्तयतीति तिथिप्रणीश्चन्द्रः तस्य ह्रासवृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् चासुषिति क्विप् प्राम्बजोणइति णत्वं कथ्याद्यने काचइति यत्वं तिथिप्रणीर्ग्रंविपश्चिग्रामणिस्त्रिनेत्रचूडामणिर् चिरेचभूरित्यमरः मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृते ति परिभाषिता कान्तिः सीतायाः चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति, बोध्यं त्वचास्यचिरदर्शिणेत्यादिना सायंदिवासदा शब्देभ्यस्तनट् भवार्थे शुचिस्मिता शुद्धहासा स्मितन्त्वदृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥

का त्वमेकाकिनी भीरु निरन्वयजने वने। क्षुध्यन्तो ऽप्यघसन् व्यालास्त्वामपालां कथन्न वा ॥ ६६ ॥

कालम्। का त्वन्देवी मानुषी राचसी वेति एकाकिनी असहाया एकादाकिनिच्चासहायइति आकिनिच् भीरु इत्यामन्त्रणञ्भयप्रकृतित्वात् स्त्रीणाम् निरन्वयानिरनुगमाजनायस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः क्षुध्यन्तोऽपि बुभुक्षमाणाअपि दिगादित्वात् यत् व्यालाहिंस्राव्याघ्रादयः कथं वा त्वान्नाघसन् न भक्षितवन्तः अदेः लुङ्सनोर्घस्लृ लृदित्वाच्च्लेरङ् क्षुध्यन्तोनाघसन्निति पाठान्तरम् तच कथन्न वा अपरिचितानेवाघसन् इति योज्यम् अपालां सतीं अविद्यमानः पालोयस्याइति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्यइति लुक् ततः पचाद्यच् ॥ ६६ ॥

का त्वमित्यादि। हे भीरु वने एकाकिनी का त्वं देवी मानुषी अन्या वा वने किम्भूते निरन्वयजने निरन्वयाविःसम्बन्धाजना यत्र भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभिदस्य प्रत्यक्षत्वाद्वा एकादाकिन्नसहायेऽभिधानात् क्षुध्यन्तोबुभुक्षमाणा व्यालाव्याघ्रादयोहिंस्राः अपालां पालकारहितां त्वां कथं ना घसन् न भक्षितवन्तः घस्लृदःसम्यत्वलघञोति अदश्चा घस्लृद नुबन्धात् ग्रासलियुदिति ङः क्षुधबुभुक्षायां दिवादिः पाल रक्षणे चौरादिकः पचादित्वादन् व्यालोदुष्टगजे सर्पे श्वापदेकाच्यवत्सल इति मेदिनी ॥ ६६ ॥

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनं। कुर्व्वाणा भीममप्येतद्वदाभ्यैः केन हेतुना॥ ६७॥

हृद। केन हेतुना इदं वनमभ्यैः अभिगतासि वद कथय अभिपूर्व्वादिणोलङ् मध्यमपुरुषैकवचनं आडजादीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मूर्त्तिः शरीरमत्यन्तसौन्दर्य्यात् गमेश्चेति खच् सा एवम्विधा मूर्त्तिर्यस्याः सा त्वभीममप्येतद्वनं सुभगम्भावुकं सर्व्वस्यैवाप्रियं प्रियङ्कुर्व्वाणा असुभगं भूत्वा सुभगं भवतीति कर्त्तरि भुवइति खुकञ्॥ ६७॥

हृदयेत्यादि। केन हेतुना त्वं एतद्वनं अभ्यैः अभिगता इति वद अभिपूर्व्वादिणोघ्याः सिप् लुगल्लोऽपः घीटीथीव्विति अम् आदिगेचोरिति णः भूयोऽम् त्यादयोऽर्थाथैकक्तेरिति तृतीया हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात् हृदयं गच्छतीति तृभृद्दइत्यादिना खः नात्वीत्यस्य व्यभिचारो वाङ्ख्यात् भीममप्येतद्वनं सुभगम्भावुकं कुर्व्वाणा प्रागप्रियं प्रियं भवतीति भुवो घेस्विष्णखुकञाविति खुकञ्॥ ६७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे। पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः॥ ६८॥

सुकृतं। सुकृतम्पुण्यकारिणं शोभनं कृतवानिति सुकर्म्मपापेत्यादिना क्विप् कं रहसि विजने त्वमुपतिष्ठसे उपस्थियसि सङ्गतकरणेतङ् प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलङ्करोतीति

क्षेमप्रियमद्रेऽणचेति अण् टिड्ढाणञित्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्व्ववत्क्विप् चाटुकारः प्रियवाक्यकरः नशब्दश्लो केत्यादिना टे प्रतिषिद्धेऽणेव भवति ईदृशस्ते किङ्करः दासः दिवा विभेति टः किंयत्तदृक्षु कृञोज्विधानमिति तत्स्त्रीविषये द्रष्टव्यम् सुरतेषु शोभनरतेषु नपुंसके भावे क्तः अनुदात्तेत्यादिनानुना सिकलोपः अनेनोभयरुचिराख्याता ॥ ६८ ॥

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृ तं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्र्यां ध्वसङ्गाराधइति सङ्गे मं शोभनं करोतीति चासुमिति क्विप् प्रियङ्करोतीति क्षेमप्रियमद्रात्कृञ्वा इति खाभावपक्षे ढात्षण् कः पुण्यकृत् ते तव सुरतेषु शोभनरतेषु किङ्करोदासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमेर्भावे क्तः वनतनाद्यनिमामिति मलोपः चाटु करोतीति क्वचिदपवादवि षयेऽप्युत्सर्गो ऽभिनिविशतइति न्यायात् सुकुष्टइति टविषयेऽपि ढात्षण् किमित्यव्ययं तस्मात् कृञष्टः ॥ ६८ ॥

परिपर्य्युदधेरूपमाद्युलोकाच्च दुर्लभं। भावत्कं दृष्टवत्स्वेतदस्मास्वपि सुजीवितं ॥ ६९ ॥

परि। एतद्रूपम्भावत्कम्भवत्याइदमिति भवतष्ठक्छसाविति ठक्छसौ ठक्छसोश्चोपसंख्यानमिति पुंवद्भावः इसुसुक्तान्तात्कः दुर्लभम्परिपर्य्युदधेः अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञा यान्द्वितीयायाम्प्राप्तायामपञ्चम्यपाङ्परिभिरिति पञ्चमी अप

परिवहिरञ्चवः पञ्चम्या इति विभाषासमासश्च अपसमासपक्षे परे र्वर्जन इति द्विर्व्वचनम् उदधिं वर्जयित्वा यस्तुरुदधिमेखलायाम्भुवि दुर्लभमायुलोकाच स्वर्गलोकान्तञ्च यावत् दुर्लभमत्रापि पूर्व्ववत्पञ्चमी ताद्दशमन्दृष्टवत्स्वस्मासु अधि सुजीवितमस्मद्विषयो अधिरधेन सुजीवितम् अहो वा सुजीवितमिति अहो शब्दार्थे अधिशब्दोवर्त्तते ॥ ६८ ॥

यरीत्यादि। एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितं अधिकं शोभनं जीवनं विषये सप्तमी, यद्वा अधि केशार्थोपाधिभ्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्मत्स्वामिकं सुजीवितमित्यर्थः मामपश्यतस्तु जनस्य तन्नास्तीति भावः भवत्या इदमित्यर्थे षिकारसंघेति कथं पुम्वत्त्वमुक्तपुंस्कः स्त्रियामित्यादौ तत्वप्रसन्नतरादावित्यस्य तद्धितसंज्ञके त्वप्रत्यये प्रसन्नतरादौ चेति देवीदासचक्रवर्त्तिव्याख्यानात् पुंवत्त्वे तु त्वतौ भावइत्यनेन त्वतलोस्त्वयोरेवमित्याद्युक्तस्मृतेऽभिधानात् योगविभागात् किम्वा पुम्वत्त्वेरिति पुम्वत् भवच्छब्दस्य सिसंज्ञायां पठितत्वात् पुम्वत्त्वेरित्यत्र कोर्लुक्त्ये चेत्यस्मात् त्ये चेत्यनुवर्त्तते वृत्तौ त्ये चेति यत्र दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात्पुम्वत्सर्व्वनाम्नोवृत्तिमात्रे तसादौ चेति परसूत्रं कीदृशं रूपं उदधेः परि परि उदधिं वर्ज्जयित्वा दुर्लभं दुष्प्रापं उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आयुलोकात् स्वर्गलोकपर्य्यन्तञ्च दुर्लभं उभयत्र अन्यारभ्येत्यादिना पञ्चमी पर्य्यन्ते व्यागमीमार्थो आङ्

आस्तिको ऽस्मासमे ऽन्यास्वियुक्तः वर्णवार्थपदैर्विभावया दिवस
भिधानात् ॥ ६९ ॥

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी। सत्परिमल
लक्ष्मीका नापुंस्कासीति मे मतिः ॥ ७० ॥

आपी ॥ परि सर्व्वतोमार्जनमिति परिमलः कलचपस्येत्यधि
कृत्य स्रजेष्टिलोपस्येति कलप्रत्ययश्चौणादिकः इह सुरतोपभो
गविमर्द्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तत्कृतत्वात् सती विद्य
माना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा त्वमपुंस्का
अविद्यमानभर्त्तृका नासीति मे मतिः पूर्व्ववत्कप् किमिव सुदिवेवा
रविन्दिनी पद्मिनी शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं
यस्याः सुप्रातेत्यादिना अच् आपीतमधुका भृङ्गैः आपीतमधु
यस्याः शेषाद्विभाषेति कप् यथेयं सत्परिमललक्ष्मीका तथात्व
मपीति ॥ ७० ॥

प्रपीत्यादि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्तृकासीति
मेमम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्त्वाद्दृशी विम
र्द्दोत्थे परिमलो गन्धे जनमनोहरइत्यमरः सुरते भोगविमर्द्द
एव परिमलइति नयमप्रस्ता पुंलक्ष्मीभ्यामेकवचनान्ताभ्यां कौव
कश्रोत्राविति परः स्वमते लक्ष्मीशब्दात् घृतःकइति कः अपुंस्केति
पुंवत्स्युक्तपुंस्कइति ज्ञापकात् घृतःकइत्यस्य योगविभागेन क्वचि
दन्यत्रापि कइति बोध्यं स्वार्थे कोवा यथा भृङ्गैः प्रपीतं मधु यस्याः

स्तादृशी सुदिवा अरविन्दिनी पद्मिनी तथा त्वमपि सत्परिमल लक्ष्मीका शोभनं नीहारादिरहितं दिवा दिनं यस्याः सुपूर्व्वाद्दिवाशब्दादङ्गुलीयो अदिति परः स्वमते दिवाशब्दात् स्वार्थे ष्णः तस्यानित्यत्वविवक्षया न ईप वृद्धिश्च यद्वा शोभने दिवसे इति सप्तम्यन्तं रूपं दिवाशब्दोऽयमव्ययः ॥ ७० ॥

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः। साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

मिथ्यै। श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषाकृञीत्यनुवर्त्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा गतिसमासे ल्यवादेशः अहमभिमन्ये किं मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्यैव श्रीः किन्तु त्वमेवेति आत्ममाने खश् दिवादित्वात् श्यन् इच एकाचोऽमत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वान्मलोपाभावः न विभक्तौतुस्मा इति वचनात् अचीतीयङादेशः क्विबन्ताधातुत्वन्न जहतीति क्विब्वचीत्यादिना श्रयतेरौणादिकः क्विप् हरिस्वात्मानं श्रीमन्तम्मन्यमानो मृषा न श्रीमान् यस्य त्वं स एव श्रीमानित्यहमभिमन्ये॥ ७१ ॥

मिथ्यैवेत्यादि। श्रिया लक्ष्मीः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते त्वमेव श्रीस्त्वदीय शोभाहरणात् त्वत्पतिरेव त्वद्योगात श्रीमानिति भावः मन्या

त्यार्थइति खश् भित्वात् दिवसुतुदेति यन् खित्यव्याजइषइति एकाजिजन्तत्वात् श्रीमन्दस्य दीक्षान्तत्वं इत्तेपाथौप्राथ्वमित्यादिना समासपक्षेव्याद्दनञः क्रोयपो साक्षादादेरभूततद्भावेकञः क्रोयप् वेति परः॥ ७१॥

नोदकण्ठिष्यतात्यर्थं त्वामैक्षिष्यत चेत् स्मरः। खेला
यन्ननिशं नापि सजूःकृत्य रतिं वसेत्॥ ७२॥

नोद। स्मरभार्य्या रतिः सापि रूपेण निकृष्टेति दर्शयति चेत् यदि स्मरः त्वामैक्षिष्यत दृष्टवानभविष्यत् तदा अत्यर्थमो दकण्ठिष्यत रतिम्प्रति भृशमुत्कण्ठितोनाभविष्यत् ईषद्दर्शने इति कठिशोकइति भैवादिकात् क्रियातिपत्तौ लृङ् नापि रतिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत् अत्र क्रियातिपत्तिर्न विवक्षिता किन्तु हेतुहेतुमद्भावः नापि रतिं सजूःकृत्य वसेत् यदि त्वामीक्षेतेति हेतुपदमभ्यूह्य हेतुमद्भावदर्शनात् उर्य्यादिषु सजूःसहार्थइति वचनात् गतिसंज्ञा खेलायन् अनिशं क्रीडन् सर्व्वदा खेलाशब्दात् कण्ड्वादित्वात् यक्॥ ७२॥

नोदेत्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह स्वयं कामश्चेत् यदि त्वां ऐक्षिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितोनाभविष्यत ईषद्दर्शने कठिङ्भ्वा ध्याने उभयत्र ध्वर्यासम्भवे यो नापि रतिं स्वभार्य्यां सजूःकृत्य

सहायीहत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत् तां परित्यजेदेव यदि त्वां पश्येत् इति हेतुपदमत्र बोध्यं भव्येवाफलहेतो रित्यस्य योगविभागाद्भविष्यतेऽपि स्त्री भव्येऽपि न क्षतिः विलासार्थात् खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे यक् सजुःशब्दोऽयमव्ययः सहायार्थे वर्त्तते साक्षादादित्वात् हस्तेपाणौ शब्दंत्यादिना समासः ॥ ७२ ॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥ ७३ ॥

वल्गु। त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह का इह जगति का स्त्री न मन्तूयेत् न कुप्येत् सर्व्वदा कुप्यत्येव ईर्षायुक्तत्वात् स्त्रीणाम सम्भावने लिङ् वल्गुमन्तुशब्दाभ्यां कण्ड्वादित्वाद्यक् कोवा कोनाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदोषानभिज्ञत्वात्ते तव कान्तिं विलोक्य नाभिमनायेत पूर्व्वमदृष्टत्वादनभिमनाः सन् अभिमनाः सचेताभवेत् पूर्व्ववल्लिङ् अभिमनसोभूशादित्वात्क्यङ् सलोपश्च महादेवतुल्योवा आस्तामन्यः सोऽपि तावदभिमनायते ॥ ७३ ॥

वल्गिमत्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्व्वव कुप्यतीत्यर्थः वल्गुमन्तुभ्यां कण्ड्वादित्वात्क्यः र्थोऽजय्यरे कोवा स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा

तव कान्तिं विलोक्य न अभिमनायेत प्रीतमना न भवेत् अपि तु सर्व्वएवाभिमनायेत भृशादेश्चर्थे वेति पाक्षिकोक्यङ् लोपश्च चो ऽज्यरे प्रोक्षासम्भावने इति लो॥ ७३॥

दुःखायते जनः सर्व्वः सएवैकः सुखायते। यस्योत्सुकायमाना त्वं न प्रतीपायसेऽन्तिके॥ ७४॥

दुःखा॥ सएवैकोजनः सुखायते सुखं वेदयते यस्यान्तिके समीपे न त्वम्प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमाना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपायसे सर्व्वोजनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् उत्सुकप्रतीपशब्दाभ्याम्भृशादित्वात्॥ ७४॥

दुःखेत्यादि। यस्यान्तिके समीपे त्वं उत्सुकायमाना उत्सुकीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि सएवैकोजनो जगति सुखायते सुखमनुभवति अन्यः सर्व्वोजनोदुःखायते दुःखमनुभवति सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे क्यः केचित्तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखः सुखोभवति अदुःखोदुःखोभवति इत्यर्थे डाच् लोहितादेःपक्षेति क्यमाङः उत्सुकप्रतीपाभ्यां भृशादित्वात् च्व्यर्थे क्यः केचित्तु प्रतीपशब्दात् धान्क्यकीत्यादिना आचारे क्यमाङः॥ ७४॥

कः पण्डितायमानस्त्वामादायामिषसन्निभां। त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनं ॥ ७५ ॥

कः पं। पण्डितायमानः अपण्डितः कथमपि पण्डितोभवन् भृशादित्वात्क्यङ् त्वामामिषसन्निभां सर्व्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने अवसदित्यर्थः उपान्वध्याङ्वसइति कर्म्मसंज्ञा कीदृशः त्रस्यन् बिभ्यत् वैरायमाणेभ्यः वैरङ्कुर्व्वाणेभ्यः शब्दवैरेत्यादिना क्यङ् भीत्रार्थानामित्यपादानसंज्ञा ॥ ७५ ॥

कइत्यादि। कः पण्डितायमानः अपण्डितः पण्डितोभवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वां आदाय गृहीत्वा शून्यं वनं अन्ववसत् वसतिस्म कर्म्मक्रियेत्यादिना ङे ढं पण्डिताद्भृशादित्वात् क्यः वैरायमाणेभ्यः वैरं कुर्व्वाणेभ्यः त्रस्यन् शत्रुभयाभावे एवं कर्त्तुमनुचितमिति भावः वैरात् शब्दादित्वात् शब्दसुखकष्टादेरिति कृतौ क्यः यतोऽपायभीति अपादानसंज्ञा आमिषं पलले लोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः ॥ ७५ ॥

ओजायमाना तस्यार्थं प्रणीय जनकात्मजा। उवाच दशमूर्द्धानं सादरा गद्गदं वचः ॥ ७६ ॥

ओजा। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच दश मूर्द्धानः शिरांसि यस्य तस्यार्घ्यमर्प्णीय दत्वा अतिथिरयमिति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ओजायमाना ओज इवाचरन्ती कर्त्तुः क्यङ् सलोपश्च ओजसोऽप्सरसो नित्यमिति वचनात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किमुवाच वचोवक्ष्यमाणं सादरा सती परिव्राजक इति गद्गदमनभिव्यक्तमसंस्कृतत्वात्॥ ७६ ॥

ओजेत्यादि। जनकात्मजा सादरा सती तस्य कपटपरिव्राजकस्य अर्घं प्रणीय अतिथिबुद्ध्या दत्वा दशमूर्द्धानं दश मूर्द्धानो यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं वचोवक्ष्यमाणं उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात् ओजस्विनीवाचरन्ती ओजःशब्दात् धर्म्मिप्रधानात् घाम्ब्राक्यीति क्यः सलोपश्च भृशादित्वात् च्व्यर्थे वा क्यः तस्य इति सम्प्रदानस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यस्य समीपे स्थापयित्वा इति वार्थः मूल्येपूजाविधावर्घः अर्घाय इदमित्यर्थे विकारसंघेति यः॥ ७६ ॥

महाकुलीनऐक्ष्वाके वंशे दाशरथिर्म्मम। पितुः प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनां॥ ७७॥

महा। यदुक्तन्त्वेन कं रक्षस्युपतिष्ठसइति अस्य प्रतिवचनं मम भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञौ

विति स्वम् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकुलस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकुर्नामयमैक्ष्वाकः दाण्डिनायनेत्यादिना टिलोपनिपातनम् अन्ये तत्र सन्तीत्याह दाशरथिः दशरथस्यापत्यं यः सम्म भर्त्ता महाकुलीनः कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च क्षेमकारः क्षेमप्रियमद्रेण्वेति चकारात् खच्॥ ७७ ॥

महेत्यादि। कं रहस्युपतिष्ठसे इति रावणप्रश्ने उत्तरमिदं मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिषी च ज्येष्ठ एव गम्यते दशरथस्यापत्यं इति वाक्यादतइति अदन्तत्वात् ञिः ञित्त्रिः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशे इत्यर्थाद्गम्यते शिवादित्वात् ष्णः ओर्लोपोऽकद्रुपाण्ड्वोरेये इत्यत्र एयश्च अश्चेति समासात् उकारलोपः ये तु केवलष्णेयप्रत्ययइति व्याचक्षते तन्मते योगविभागात् महाकुले विद्यमानः ढखेकादिति खीनः महाकुलीनइति पाठे अनित्यविवक्षया न ञिः महाकुलस्यापत्यमिति केचित् पितुः प्रियङ्करः प्रियङ्करोतीति क्षेमप्रियमद्रात्कर्म्मेति खः तस्य विकल्पपक्षे तपस्विनां क्षेमकारः कुशलकर्त्ता ढात्‌षण्॥ ७७ ॥

निहन्ता वैरकाराणां सतां वङ्ककरः सदा। पारस्वधिकरामस्य शत्रोरन्तकरो रणे॥ ७८ ॥

निह। वैरकाराणां शत्रूणां वैरपूर्ब्बात्कृञोनशब्दश्लोकेत्यादिना टे प्रतिषिद्धे अणेव भवति निहन्तेति हजन्तस्य प्रयोगः तत्र कर्म्मणि षष्ठी सतान्धर्म्मे स्थितानाम्बहुकरः बहुकार्य्यङ्करोतीति दिवाविभेति टः स्त्रीविवचायान्तु किंयत्तद्बहुष्विति करोतेरच् आङ्परयोः खनिशृभ्याण्डिच्चेत्यौणादिकः कुः परशुशब्दः तत्पर्य्यायएवाव्युत्पन्नः परश्वधशब्दः सप्रहरणं यस्य परश्वधाङ्गस्य तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरोविनाशयिता अन्तङ्करोतीति पूर्ब्बवट्टः रणे सङ्ग्रामे तत्र भवः ॥ ७८ ॥

निहेत्यादि। तथा वैरकाराणां निहन्ता हारयण् कर्म्मणि षष्ठी सतां साधूनां सदा सर्ब्बदा बहूनि कार्य्याणि करोतीति बहुकृत् रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ष्ठिकः परान् श्यति खण्डयतीति परशुः परश्वधश्चेति निपातनात् ॥ ७८ ॥

अध्वरेष्विष्टिनां पाता पूर्त्तो कर्म्मसु सर्व्वदा। पितुर्न्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्दनं ॥ ७९ ॥

अध्व। इष्टमेभिरिति इष्टिनोयज्वानः इष्टादिभ्यश्चेतीनिः किमिष्टवन्तः अध्वरान् कर्म्माणि तत्र क्तस्येन्विषयस्येति कर्म्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्म्मणि षष्ठी क्तयोगे पाता रक्षिता पूर्त्ती कर्म्मसु सर्व्वदा पृणातेर्निष्ठायामुदोष्ठ्यपूर्ब्बस्येत्युत्वम् स

ध्याख्येत्यादिना निष्ठागमप्रतिषेधः पूर्त्तमनेनेति पूर्व्वव्रिहिनिः किमूर्त्तमिति सर्व्वदा श्राद्धादिकर्म्माणि पूर्व्ववत्सप्तमी सराजत्वं राज्यम् हित्वा त्यक्त्वा वनमभ्यागमत् अभिमुख्येन आगतवान् लुङ् ऌरङि रूपम् पितुर्नियोगात् नाथोग्यत्वात् समे भर्त्तेति योज्यम् ॥ ७८ ॥

अध्वरइत्यादि। तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पालरक्षणे इष्टं यजनं भावे क्तः ढघेक्तनीति कर्म्मणि षष्ठी सर्व्वदा कर्म्मसु पूर्त्ती पूर्त्तं पूरणं भावे क्तः रुत्वाद्योदित्यादौ पूवर्ज्जनात्र क्तस्य नः वृद्धुश्रिन्नूर्णोरिति इम्निषेधः कर्म्मोपादाने ऽपि भावे क्तः अध्वरान् इष्टमेभिः कर्म्माणि पूर्त्तमनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययोभवेदिति यतः खमते क्तेनाढे इति ज्ञापकात् क्तान्तात्कर्त्तरि इन् तद्योगे कर्म्मणि सप्तमी किम्वा इष्टपूर्त्ताभ्यां भावक्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् अध्वरकर्म्मभ्यां विषये सप्तमी केचित्तु अध्वरा इष्टा एभिः कर्म्माणि पूर्त्तान्यनेन चेति कर्म्मक्तादिन् कर्त्तरीत्याहुः यः पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् समे भर्त्तेति योज्यं ॥ ७९ ॥

पतत्त्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने। यस्य वाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

पत ॥ यस्य वाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घ

निद्रया शेरते समम भर्त्सैनि योऽन्यम् शेरतइति शीङोरुट् कीदृशानि अश्रेणयः श्रेणयोभूतानि ऊर्य्यादिच्विडाचश्चेति च्विः क्तानात्तुगविशब्दग्रइति च्विः च्वाविति दीर्घः च्वर्थानान्तु श्रेण्यादयः कृतादिभिरित्ययं विषयः पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिहृतानि ॥ ८० ॥

पतत्रीत्यादि। वसन् वैरायमाणेभ्य इति वाक्ये तस्य चास्मा नास्तीत्युत्तरमिदं यस्य वाणैः शरैर्निकृत्तानि खण्डितानि रक्षांसि भयदे वने शेरते पतितानि सन्तीत्यर्थः समे भर्त्सैति सम्बन्धः शीङः की अन्ते शीङोरुट् मान्तारम् मान्तोऽदनतः अश्रेणयः श्रेणयोभूतानि श्रेणीभूतानि च्विः कृभ्वस्त्यभूततद्भावइति च्विः दीर्घश्च त्वोवमा वोलोपइति च्विलोपः पतत्रिभिः खगादिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि परिहृतानि उपभुक्तानि वा ॥ ८० ॥

दीव्यमानं शितान् वाणानस्यमानं महागदाः।
निघ्नानं शात्रवग्रामं कथं त्वं नावगच्छसि ॥ ८१ ॥

दीव्य। शितांस्तीक्ष्णान् वाणान् दीव्यमानं क्षेप्तुं शक्नुवन्तं क्षिपन्तं वा अनेकार्थत्वाद्धातूनां दिवु क्रीडाविजिगीषाव्यवहारेत्यादिना चानश् दिवादिभ्यः श्यन् महागदाः अस्यमानं क्षेप्तुं शक्नुवन्तं क्षिपन्तं वा पूर्ववच्चानश् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं हन्तुं शक्नुवन्तं घ्नन्तं वा पूर्ववत्प्रत्ययः गमहनेत्युपधालोपः होहन्तेरिति कुत्वम् एवंविधं रामं कथं नावगच्छसि तेन कर्म्मणा सर्व्वलोकविदितत्वादिति भावः ॥ ८१ ॥

दीव्येत्यादि। कथं त्वं राममपि नावगच्छसि न जानासि सर्व्वलोकप्रसिद्धकर्म्मत्वात् तथाहि शितानाम् वाणाम् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा दिव्युजिगीषेच्छापण द्यूतौ क्रीडागत्योः दिवोऽधवेति करणे द्वितीया मद्धतीर्गदाग्रस्य मानं चेप्तुं शक्तं उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा चेप्तुं शीलं यस्येति वा शाचवान् निघ्नानं निहन्तुं शक्तं सर्व्वत्र शक्तिवयसा च्छील्येशतः शानः कर्त्तरि गमित्युक्लोपे हनोऽङ्क्तोघ्नः शत्रुरेव शाचवः स्वार्थे ष्णः॥ ८१॥

कुलकं।

भ्रातरि न्यस्य यातोमां मृगाविन्मृगयामसौ। एषि तुं प्रेषितोयातोमया तस्यानुजोवनं॥ ८२॥

भ्रात। यस्यैवं कामावित्याह असौ रामोमाम्भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगैः स्वार्थिकोणिच् अदन्त त्वाच गुणो न भवति तदन्तात्कृञः श इति अधिकृत्य परिचर्य्या परिसर्य्या मृगया टाद्यानामुपसङ्ख्यानमिति भावे शप्रत्ययः यक् अलोपाभावस्य टाप् मृगान्विध्यतीति मृगावित् क्वौ भ्रातेति चेदाह तस्यानुजः कनिष्ठोमया प्रेषितः सन् यातोवनं अनु पश्चा ज्जायतइति अन्येभ्योऽपि दृश्यतइति डः अनौ कर्म्मण्युक्तमकर्मा ण्यपि भवति किमर्थं एषितुम् तमेव ज्ञातुम् इषुगताविद्यस्य रूपम् ज्ञानार्थत्वात् प्रेषितइति तस्यैव रूपम्॥ ८२॥

भ्रातरात्थ॥८। तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतोगत

इत्याह असौ रामो मां भ्रातरि न्यस्य समर्थ्य मृगयां यातो गतः मृगान् विध्यतीति मृगावित् स कुत्रेत्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुं अर्थाद्रामं वनं गतः सर्व्वे गत्यर्था ज्ञानार्था इति वचनात् इष्यसर्पण इत्यस्य ज्ञानार्थत्वं अनु जातोऽनुजः हनजनादिति डः ॥ ८२ ॥

अथायस्यन् कषायाक्षः स्वन्नखेदकणोल्वणः। स न्दर्शितान्तराकूतस्तामवादीद्दशाननः ॥ ८३ ॥

अथेति। अथैवमुक्तो जानक्या दशाननस्तामवादीत् उक्तवान् आयस्यन् क्रोधाविष्टत्वात् शरीरङ्खेदयन् यसुप्रयत्न इति देवा दिकः परस्मैपदी क्रोधादेव कषायाक्षः वहुव्रीहौ सक्थ्यक्ष्णो रिति षच् स्वन्नैः स्रुतैः खेदकणैरुल्वण उद्भटः व्याप्त इत्यर्थः स्वन्दे र्निष्ठायां रूपम् संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायो येन स एवम्विधः ॥ ८३ ॥

अथेत्यादि। अथ तयैवमुक्तो दशाननस्तां सीतामवादीत् अजवदेति ञिः कीदृशः आयस्यन् तदाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य सतथा सक्थ्य क्ष्णोःषः स्वाङ्गे स्वन्नैः स्रुतैः खेदकणैरुल्वणः उद्भटः व्याप्त इत्यर्थः स्वन्दूरुवुस्तौ ऊदित्वादेमुत्वे निमळीश्वीदित्यादिना इमनिषेधः हसुङ्क्नलोपोऽणाविति नस्य लोपः स्वन्ताधोदिति क्तस्य इस्य च नः सन्दर्शितं प्रकटीकृतं आन्तरं अन्तर्गतं आकूतमभिप्रायो येन स तथा ॥ ८३ ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितं। कोनग्न मुषितप्रख्यं बङ्क मन्येत राघवं॥ ८४॥

कृते। कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्योढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठा सुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्ज्जितः विपूर्व्वस्य वसतेर्हेतुमण्णन्तस्य निष्ठायां रूपम् तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितोनग्नोभवति तद्भूतं पूर्व्वकालेति सः तस्याः पूर्व्वापरकालत्वात् राजदन्तादित्वात्पर निपातः ईदृशं राघवङ्कोबङ्क मन्येत श्लाघेत नैवेत्यर्थः॥ ८४॥

कृतेइत्यादि। कोजनो राघवं बङ्क मन्येत श्लाघेत न कोऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परित्यक्तं राज्याद्दहिष्कृतं वर्षैश्चतुर्भिरन्तस्य रूपं ततएव लग्नमुषित प्रख्यं यः कश्चित् प्रथमं मुषितोनिराकृतः पश्चान्नग्नोलज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्व्वकालस्यापरकालेनेति कर्म्मधारयार्थं परसूत्रं स्नमते पूर्व्वकालसम्बन्धात् यथा मुषितः परकालसम्बन्धात् सएव नग्नइत्येकार्थताश्चैव अभिधानात् पूर्व्वकालीनस्य परनिपातः राजदन्तादित्वादिति परः ज्येष्ठाकनिष्ठाभ्यामावृन्तत्वात् वाङ्कायतोऽव्यावादेरिति कृतस्य श्वेयस्य कल्याण्यादिभगेत्यादिना इनेयः लग्नेति ओलजङोस्त्रिथि ओदित्वात् स्वल्पायोदिति कृस्य नकारः मग्नवज्जस्य गत्वं केचित्तु नस्जेर्नेस्य निपातनात् तवर्गपञ्चमइत्याङ्कः॥ ८४॥

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्। यद्य सौ कूपमाण्डूकि तवैतावति कः स्मयः॥ ८५॥

राक्ष। अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान् पिण्डीशूरान् पिण्ड्यामेव शूरान् भोजन एव शूरान् पात्रेसमितादयश्चेति सः वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृतवान् हे कूपमाण्डूकि कूपे माण्डूकीव पूर्व्ववत्तः ढक्मण्डूकाच्चेति चकारादण्वापत्ये एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव युज्यते मत्पराक्रमे तु युक्तः तच्चापि मम न युक्तं वक्तुमित्याह ॥ ८५॥

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वटवो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्ड्यां भोजनएव शूरान् कार्य्यान्तराक्षमान् राक्षसान् निरस्तवान् तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि तव कः स्मयो गर्व्वः विस्मयोवा मण्डूकस्य भेकस्य स्त्र्यपत्यमिति शिवादित्वात् ष्ण कूपे माण्डूकी इव एतेनाल्पदृश्वत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मयइति सूचितं कूपमण्डूकीति पाठे जातेरतइतीप् कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात् क्षेपे तत्पुरुषइति परः स्वमते अर्थवशात् क्षेपोगम्यते॥ ८५॥

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः। युक्तं ममैव किं वक्तुं दरिद्राति यथा हरिः॥ ८६॥

मत्प। राज्यभोगादय: परिच्छदोयस्थस्यादि; समत्पराक्रमेण संचिप्तोऽपहृतोयस्य हरेरिन्द्रस्य सयथा दरिद्राति निरर्थको भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपोलुक्॥ ८६ ॥

मदित्यादि। मत्पराक्रमेण संचिप्तोऽपहृतो राज्यभोगपरिच्छदोयस्थस्यादिर्यस्य तादृशोहरिरिन्द्रोयथा यदि दरिद्राति दुर्गतोभवति तदा किं ममैव वक्तुं युक्तं अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्रायत्वदुर्गत्यां॥ ८६ ॥

निर्लङ्कोविमदः स्वामी धनानां हृतपुष्पकः। अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणं॥ ८७॥

निर्ल। यस्मात् कारणात् धनानां स्वामी धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति टच् अधिशीङ्स्थासामिति कर्म्मसंज्ञा तेन तृतीयासप्तम्योर्व्वहुलमित्यभावो न भवति नाव्ययीभावादित्यमेव भवति तत्कारणमम पराक्रमम्मां वा कोनावैति न जानाति कीदृशः निर्लङ्कः लङ्कातोनिष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्तिचेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् हृतपुष्पकः हृतं आच्छिन्नम्पुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लङ्का पुष्पकञ्च धनदस्यासीत् तच्छित्वा अनेन गृहीतमिति॥ ८७॥

निर्लज्ज इत्यादि। धनानां स्वामी कुवेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्यान्तर्मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं कोजनोनावैति अपितु सर्व्वएव जानाति कीदृशः कुवेरः निर्लज्जः लज्जायानिष्क्रान्तः पञ्चमीतत्पुरुषः यंपूर्व्वमिति निरः पूर्व्वनिपातः निर्गता लज्जा यस्येति वा विमदः विगतोमदो दर्पोयस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्पराक्रमादेवेति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः झय्नदीपौर्णमास्याग्रहायणीगिरेर्व्वेति पचे अः कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं॥ ८७॥

भिन्ननौक इव ध्यायन् मन्तोविभ्यद्यमः स्वयं। कृष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः॥ ८८॥

भिन्न। स्वयं साक्षान्मत्तोविभ्यत् त्रस्यन् यमोवैलक्षण्यात् मुखेन कृष्णिमानङ्कृष्णवर्णत्वं वर्णदृढादिभ्यःष्यञ्चेति चकारादिमनिच् दधानेन धारयता इत्थम्भूते तृतीया निरुद्यतिः निरुद्यमः आस्ते उत्पूर्व्वाद्यमेः स्त्रियाक्तिन् अनुनासिकलोपः कीदृशः ध्यायन् चिन्तयन् किमिममापद्यदहमनेन हृतसर्व्वस्वइति भिन्ननौकइव विपन्नपोतवणिगिव उरःप्रभृतिभ्यः कप्॥ ८८॥

भिन्नेत्यादि। यमः मत्तोविभ्यत् त्रस्यन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यमआस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जानाति नत्वन्येन वोधितइत्यर्थः कृष्णिमानं कृष्णत्वं दधानेन मुखेन

उपलक्षितः विशेषणे तृतीया गुणादिमनूभावे भिन्ना विदारिता शोर्थस्य ताहशोवणिक् यथा ध्यायति तथा ध्यायन् प्रकवचना स्नेव शैत्वञ्चेन बहुव्रीहौ कदति परः स्वमते स्वार्थे पुंवत्स्त्र कपुंस्कदति आपकात् तस्केरिति अप्मद्: पञ्चम्यास् युष्म दस्मदोस्त्वाहाविव्यादिना मदादेशः गणोककार्य्यस्य वाकस्मात् त्यदादिटेरःकाविति अनिषेधः भिभोतिभीत्यां मत: क्रादोरेदि: श्रदेरित्युक्तेः नुण् निरत्पूर्व्वात् यमः क्तौ वनतनादिमिसासिति मलोपः एतेन दिक्पतीनां जयादरुमेव सुमयिद्धोमतु तथेत्युक्तं ॥ ८८ ॥

समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी। रत्न पारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥

एवं। स्वपौरुषमदर्श्य स्त्रीकर्त्तुमाह समु। हे मैथिलि लङ्केति नाम्ना मम पुरी कीदृशी समुद्रएवोपत्यका आसन्नोयस्याः सा स मुद्रोपत्यका समुद्रस्य पर्व्वतोपत्यकात्वात् समुद्रोपत्यकेति समा से साधुत्वम् भवति यतः संज्ञाधिकारात् पर्व्वतस्यासन्ने अधि रूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयो: साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्यादितो कारो न भवति हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्व्वता धित्यका त्रिकूटपर्व्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्ना न्यारमवस्थानमयन्ते बुध्यन्ते तत्परीक्षकाः सर्व्वरत्नस्थानमि त्यर्थः। दुर्व्वलत्वामभिभवनीयतां रत्नोपचयात् समृद्ध ताद्ध्ययन् प्रलोभयति ॥ ८९ ॥

समुद्रइत्यादि। सम्प्रति सीताप्रलोभनं क्रियते हे मैथिलि लङ्केति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उपत्यका समीपे भूमिः पर्व्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता अध्युपाभ्यां त्य चादित्वात् त्य चाद्यचिरेत्यादिना भवादित्वात् ऊर्द्धासन्नयोरस्य: ततः स्वार्थे कः स्त्रियामाप् कायगाशीरकइत्यादिना चिपादित्वात् न इत्वं उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधित्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्रउपत्यका पर्व्वतासन्नभूमिर्यस्याइति केचित् एतेन दुर्गमत्वं सूचितं हैमी हेम्नो विकारः विकारसंघेति ण्णः मन्वर्व्मेत्यादौ विकारस्यवर्ज्जनात् नलोपनिषेधाभावात् न्वोर्लोपैताविति नस्य लोपः रत्नानां पारमवसानं अयन्ते बुध्यन्ते तत्परीचका अचेति रत्नपारायणं चञ्चलमटोघे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्व्वरत्नस्थानमित्यर्थः यदाह हलायुधः साकल्यवचनं प्राज्ञैः पारायणमुदाहृतमिति॥ ८९॥

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता। अपि तौरुसुगन्धिस्रक् तस्यां वस मया सह॥ ९०॥

आवासे। तस्यां पुर्य्यां आवासे गृहे आवसत्यस्मिन्निति अधिकरणे घञ् मया सह त्वं वस प्रार्थनायां लोट् सिक्तसंमृष्टे पूर्व्वं सिक्ते पश्चात्संमृष्टे गन्धैर्लिप्तवासिता सती पूर्व्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता संमृष्टादिभिः पूर्व्वकालेत्यादिना

यः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वं किमिति त्वया सह वसामीति चेदाह ॥ ८० ॥

आवासइत्यादि। तस्यां पुर्य्यां आवासे गृहे मया सह त्वं वस प्रार्थनायां लोट् पूर्व्वं सिक्ते पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धै श्चन्दनादिभिर्लिप्तवासिता पूर्व्वं लिप्ता पश्चाद्वासिता धूपैः उभयत्र पूर्व्वापरकालसम्बन्धादेकार्थत्वेन कर्म्मधारयः गन्धयतीति गन्धश्चन्दनादिः वासिता करिणी गार्य्यांवासितं सुरभीकृते। ज्ञानमात्रे खगारावे वासितं वस्त्रवेष्टितइति विश्वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती सूतसुरभिपूतेरित्यादिना गन्धादिप्रत्ययः ॥ ८० ॥

सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे। राघवः प्रोष्यपापीयान् जहीहि तमकिञ्चनं ॥ ८१ ॥

सङ्ग। हे पौंस्नि पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यान्नञ्स्नञौ स्त्रीप्रत्यये नञस्नञीकक्ख्युनतलुनानामुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ अङ्गीकुरु गमेः प्रार्थनायां लोट् इषुगमीत्यादिना छत्वम् समोगम्यृछेत्यादिना तङ् न भवति सकर्म्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्व्ववत्प्रत्ययः तरुणी युवती सती शुभे कल्याणि शोभतइति इगुपधलक्षणः कः ममापि तादृशोभर्त्तास्तीति चेदाह राघवः प्रोष्यपापीयानिति पापशब्दादिष्ठनेयस्सुन् लुक् मतुपः प्रोष्य पापीयानिति मयूरव्यंसकादित्वात्सः देशान्तरं यात्वा पापव

सरः अतएतमकिञ्चनन्दरिद्रं न विद्यते किञ्चन यस्येति सर्व्व नामाव्ययसंज्ञाया उपसर्जनप्रतिषेधइति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोपः जहीहि त्यज ईत्वस्य जहातेश्चेति वा वचनाद्वि कल्पः॥ ८१॥

सङ्गेत्यादि॥ हे पैंस्नि हे पुरुषयोग्ये पुरुषहिते वा हे शुभे कल्याणि तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां गी सदृशयोराव योर्य्योगउचितइति भावः स्त्रीपुंसाभ्यां विकारसंघेत्यादिना नञ्ः नञ्पुंस्त्रियोः तरुणशब्दान्नदादित्वादीप् शोभतेइति शुभा इगु पधत्वात् ज्ञाप्रीकिरः कइति कः ममापि ईदृशोभर्त्तेति चेत् आह राघवः श्रेय्यपापीयान्देशान्तरं गत्वा पापवत्तरः पापवत् शब्दात् गुणाद्वेष्ठेयसूइति ईयसुः लुङ्मदहिनामिति वतोर्लुक् ओमं सुविदिति डित्वात् टेर्लोपः मयूरव्यंसकादित्वादत्र समास इति परः खमते गमकत्वात् असमासत्वेऽपि न चतिः तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादि त्वेन निपातनात् वाच्यलिङ्गतेति परः मञ् तत्पुरुषादर्शआदि त्वादइत्यन्ये न विद्यते किञ्चनमस्येति बहुव्रीहौ नाव्ययकार्य्य मिति केचित् खमते द्रविणे किञ्चनं क्लीवइति कोषादनव्ययेन कि ञ्चनशब्देन समासः वस्तुतोऽप्येवमकिञ्चनशब्दोनिर्धनवाची वाच्य लिङ्गः तथाच कोषः निःस्वाकिञ्चनदुर्व्विधाइति आशोरित्यादि ना ह्यकइत्वं॥ ८१॥

अश्नीत पिबतीयन्ती प्रसिता स्मरकर्म्मणि। वशीकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ८२॥

अश्नी। अश्नीत पिबतेति मयूरव्यंसकादित्वात्‌ तत्र आख्यात माख्यातेन क्रियासातत्य इति पठ्यते सततमश्नीतपिबतेत्येवम्भृत्य जनानादेष्टुमिच्छतीति सुप आत्मनः क्यच्‌ अश्नीतपिबतीयन्ती प्रसिता स्मरकर्म्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुका भ्याम्तृतीया चेति चकारात्सप्तमी वशीकृत्यानुवर्त्तिनन्दशग्रीवङ्कृत्वा साचात्प्रभृतित्वाद्गतिसंज्ञा मोदस्व हर्षञ्जनय वरमन्दिरे श्रेष्ठगृहे स्थिता ॥ ८२॥

अश्नीत्यादि। दशग्रीवं वशीकृत्य आयत्तीकृत्य वरमन्दिरे श्रेष्ठ गृहे त्वं मोदस्व हर्षं जनय वशेति सप्तम्यन्तप्रतिरूपकोऽव्ययः हस्तेपाणावित्यादिना साचादादित्वात्‌ समासः कीदृशी अश्नीत पिबतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीतपिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिबता ऐक्यं साऽस्यास्तीति समासः तत्र हि सामान्यत्वात्‌ पदमात्रस्यैव ग्रहणं तेन क्वचित्‌ स्याद्यन्तस्य क्वचित्त्याद्यन्तस्य क्वचिदुभयस्य चैक्यमिति लब्धं त्याद्यन्तस्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वास्लिङ्गत्वं तेनाच क्रियाविशेषणार्थत्वात्‌ स्त्रियामतश्चाप्‌ स्त्रीत्वं लुक्त्येचेत्यच स्यादिष्वेव ग्रहणमभिधानात्‌ तेन त्यादिकेर्न लुक्‌ निपातनाद्रूपसिद्धिरिति परे अश्नीतपिबतामिच्छतीति क्यः स्मरकर्म्मणि काम चेष्टायां प्रसिता तत्परा प्रसितोत्सुकाभ्यां तात्पर्य्ये तृतीया

चन्द्रस्याविति परः स्मृते विषयविवक्षा विज्ञयस्थमे कः॥ ८२॥

मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव। उद्भासिनी च भूत्वा मे वक्षःसम्मर्द्दिनी भव॥ ८३॥

मास्म। हे भीरु मास्म भूर्ग्राहिणी प्रतिकूला माभूः न यास्यामीत्यमुमर्थङ्गृह्णामीति कृत्वा स्मोत्तरे लङ् चेति चकारात् लुङ् गन्तुमुत्साहिनी उद्युक्ता भव शकधृषित्यादिना तुमुन् उत्साहिनीति सन्तोपपदत्वात् ततस्त्वालङ्कृतशरीरत्वादुद्भासिनी शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्द्दिनी स्तनाभ्यामुरस्थलस्य पीडिका भव ग्रहोत्साहोद्भासम्मर्द्दानाङ्ग्रहादिषु पठितत्वात् कर्त्तरि णिनिः स्त्रीभ्योङीप्॥ ८३॥

मास्मत्यादि। हे भीरु ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उद्भासिनी गत्वालङ्कारादिभिः शोभमाना भूत्वा नोऽस्माकं वक्षःसम्मर्द्दिनी स्तनाभ्यामुरस्थलस्य पीडिका भव सर्व्वत्र ग्रहादित्वात्णिन् चकारः समुच्चये अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकं॥ ८३॥

तां प्रातिकूलिकीं मत्वा जिहीर्षुर्भीमविग्रहः। वाह्वुपपीडमाश्लिष्य जगाहे द्यां निशाचरः॥ ८४॥

ताम्। यदैवमभिधीयमाना न प्रतिपन्ना तदा तां प्रातिकूलिकीम्प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा ओजःसहोऽम्भसा वर्त्तत

इत्यधिकृत्य प्रतिकूलं वर्त्तत इत्यस्मिन्नर्थे तत्रत्यनुपूर्व्वेत्यादिना ठक् जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः दृष्टराक्षस शरीररूपः सुखेन ह्रियतइति बाहूपपीडमाश्लिष्य बाहुभिरु पपीड्य सप्तम्याञ्चोपपीडइति चकारात् तृतीयान्तउपपदे णमुल् जगाहे रथेनोत्पत्य द्यामाकाशन्निशाचरोगाहते स्म दिवशब्दस मानार्थो द्योशब्दश्चौणादिकः गमेर्डोइत्यत्र द्युतेश्चेति वचनात् श्चौ तोऽम्शसोरित्यात्वं कालापैस्तु दिव्शब्दादेव व्युत्पादयितुं सूत्र मवधीयते वाम्येति दिव अमि विकल्पेनाकारादेशइति॥८४॥

तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलि कीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरोरावणो भीमविग्रहोभयङ्करमूर्त्तिः सन् बाहूपपीडं बाहुभिरुपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गाहङ्विलोडे गतवा नित्यर्थः तृतीयान्ताद्उपपीडोणमिति परः स्मृते बाहुभ्यामुप पीडः पीडनं यत्रेत्याक्षेपक्रियाविशेषणं उपपीडाधञन्तः द्यामिति द्योशब्दस्य दिव्शब्दस्य वा अमि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्ततइति क्रियाविशेषणस्य कर्म्मत्वात् ढघेकादिति ष्णिकः॥८४॥

त्रस्यन्तीं तां समादाय यातोरात्रिञ्चरालयं। तूष्णीं भूय भयादासाञ्चक्रिरे मृगपक्षिणः॥८५॥

त्रस्य। त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा याते गच्छतोरावणात् याते: शतरि पञ्चम्यां रूपम् किम्याते

रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेष्टः रात्रेःकृतिविभाषेति मुम् तस्माद्रावणाद्यत् भयन्ततोभयात् तूष्णींभूय तूष्णीमि भुवइति क्त्वेति समासे ल्यबादेशः आसाञ्चक्रिरे आसिताः दयायासश्चेत्याम् मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामिति वचनादेकवद्भावोऽत्र न भवति ॥ ९५ ॥

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यतीं तां सीतां समादाय गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां याती गच्छतोरावणाद्भयात् मृगाश्च पक्षिणश्च तूष्णींभूय मौनिनोभूत्वा आसाञ्चक्रिरे स्थितवन्तः आसङ् उपवेशे क्विजादीत्याम् भस्कृत्वामः यातइति शचन्तं रात्रौ चरतीति पचादित्वादन् रात्रेर्म्मन्वाकृति तूष्णीमित्ययं मौनार्थे वर्त्तते व्यस्यग्यनुकारइत्यादिना ऊर्य्यादित्वात् समासे क्त्वोयप् ॥ ९५ ॥

उच्चैरारस्यमानां तां कृपणां रामलक्ष्मणौ। जटायुः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

एते प्रकीर्णकाः।

उच्चैः। तां सीताञ्जटायुः पक्षीन्द्रः रावणम्परुषन्निष्ठुरं वदन् प्राप प्राप्तवान् कीदृशीं उच्चैरारस्यमानां हा राम हा लक्ष्मणेति शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनःपुनारसन्तीमित्यर्थः रसः शब्दकर्मकत्वात् क्रियासमभिहारे यङ् कृपणान्दीनाम् इति प्रकीर्णकाण्डः प्रथमः समाप्तः ॥ ९६ ॥

उच्चैरित्यादि। उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारस्यमानां

हा राम हा लक्ष्मणइति पुनःपुनराह्वयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्द्विकर्म्मकः रसशब्दे मूर्द्धन्येत्यादिना यङ्। इति गौराङ्गमल्लीक पुत्रोभरतमल्लिकः। प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ९६ ॥

## अतःपरं टाधिकारः ॥

द्विषन् वनेचरोग्र्याणां त्वमादायचरोवने। अग्रेसरोजघन्यानां माभूः पूर्व्वसरोमम ॥ ९७ ॥

इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणप्रदर्शितम् तदधिकारकाण्डम् शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थप्रकीर्णकश्लोकाभिधानमत्र च काण्डे निर्द्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसन्धायाह। द्विषन्नित्यादि। एवञ्च कृत्वा मिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् परुषं वदन् कीदृशं हि द्विषन्माभूः पूर्व्वसरोममेति ममाग्रतोभूत्वा मागा इत्यर्थः पूर्व्वं सरतीति पूर्व्वे कर्त्तरीति टः यतस्त्वमग्रेसरोजघन्यानामग्रेसरतीति पुरोग्रतइत्यादिना टः जघन्यइति शाखादिभ्योयइतीवार्थे यः पापानाम्प्रथमस्त्वम् कुतः आदायचरोवने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः

अधिकरणे चरेष्टः तेषामग्न्याः प्रधानाश्चयवः तानादायचरसि भच्चयसि कर्म्मणि षष्ठी ॥ ८७ ॥

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षण प्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तरसम्बन्धात् प्र कीर्णतास्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षित स्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भेण दो षाय एवञ्चायं सर्गोमिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विव क्षितत्वात्। अथ टाधिकारः। द्विषन्नित्यादि। परुषं वदसि ति यदुक्तं तत्किमित्याह हे वनेचराग्र्याणां मुनीनां द्विषन् शत्रो त्वं मम पूर्व्वसरोऽग्रयायी माभूः यतस्त्वं जघन्यानां नी चानां अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषन्निति द्विषः शत्रौ शतृ रिति परः स्मर्त्तते द्विषच्छब्दः शत्रुवाचित्वे रूढएव विदेशार्थे तु ङीपमवदिति शतृः उभयथा सम्बन्धे षष्ठी वने चरतीति पचा दित्वादन् अभिधानात् सप्तम्यलुक् अग्रेभवोऽग्र्यः श्रेष्ठउच्यते रेफा न्तपाठेऽग्रशब्दएव श्रेष्ठार्थः तथाच। अग्रमालम्बने प्राते परि माणे पलस्य च। प्रान्ते समन्तादधिके प्रधाने प्रथमार्थयोरिति विश्वः। दामागेहागित्यादौ यच्छब्दनात् न दाञ्च इत्वं चरेः पूर्व्व वदन् गमकत्वात् दत्तार्घाः सिद्धसंघैरितिवत् क्रियायाः कार कापेक्षायामपि यवन्तेन समासः अविवक्षितकर्म्मत्वात् सापेक्षत्वा भावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समासइति परः अग्रे इत्येकवचनान्तमव्ययं खलु

इति टः अघनं पश्चाद्भागः तन्तुमोशघन्यः विकारसंघेत्यादि ना तुल्यार्थे यः ॥ ८७ ।

**यशस्करसमाचारं ख्यातं भुवि दयाकरं । पितुर्व्वाक्यकरं रामं धिक्त्वां दुन्वन्तमत्रपं ॥ ८८ ॥**

यश । रामन्दुन्वन्तमुपतापयन्तमत्रपन्निर्लज्जन्धिक् त्वां गर्हा टुदुउपतापे इत्यस्य सौवादिकस्य शतरि हुश्नुवोःसार्व्वधातुक इति यणादेशे रूपम् कीदृशं रामं यशस्करसमाचारं समाचरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः कञोहेत्वित्यादिना टः विसर्ज्जनीयस्य सः यशस्करणहेतुभूतः समाचारोयस्य ख्यातम्भुवि प्रसिद्धन्दयाकरङ्करुणाकरणशीलं ताच्छील्ये टः पितुर्वाक्यकरम्पितुर्वचनानुष्ठाने अनुकूलं आनुलोम्ये टः ॥ ८८ ॥

यशस्केत्यादि । रामं दुन्वन्तं उपतापयन्तं अत्रपं परस्त्री हरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वी टुदुउपतापे स्वादित्वात् शतरि नुःश्नुवोरिति वः रामं कीदृशं यशस्करः समाचारोयस्य तं यशःकरोतीति स्वकुष्टइति टः अत्र ढातष ष्ठिति सूचात् ढादित्यनुवर्त्तते सेतुकसेति वेः सः कञोहेत्वादावर्थे टइति परः स्मरते यशस्करी विद्येति निर्द्दिशता विद्याया यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति यद्यस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं

समाचारश्चेष्टा यथा ऽलमटोऽघे इति यत्र भुवि ख्यातं इत्याक रणशीलं पूर्ब्ववट्टः परमते ताच्छील्यार्थेऽपि पितुर्ब्वाक्यानुष्ठाने ऽनुकूलं पूर्ब्ववट्टः परमते ऽनुकूलार्थेऽपि वाक्यशब्देनाच तदभि धेयमुच्यते ॥ ९८ ॥

अहमन्तकरो नूनं ध्वान्तस्येव दिवाकरः। तव राक्षस रामस्य नेयः कर्म्मकरोपमः ॥ ९९ ॥

अहम्। हे राक्षस अहमेव नूनमवश्यमन्तकरः विनाशयिता कीदृशः रामस्य नेयोवश्यः अश्चायत् कर्म्मकरोपमः भृतकतुल्यः कर्म्मणि भृताविति टः ध्वान्तस्येव दिवाकरः यथान्धकारस्या न्तकरो दिवाकरः सूर्य्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा खमपातेति सम्बन्धः ॥ ९९ ॥

अहमित्यादि। हे राक्षस नूनं निश्चितं अहं तव अन्तकरः नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्य्यो ध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधाररूपदिनवचनो ऽव्ययः तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादि त्वाट्टइति परः स्वमते दिवाशब्दोऽयमव्ययः सत्तन्यन्तलं प्रायिकं तेन दिवा दिनं करोतीति पूर्ब्ववट्टः वाऽऽख्याता दिवा दिवसे करोरश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्तमवि क्षि शुश्वाड इत्यादिना निपातः अहं कीदृशः रामस्य नेयः वश्यः वश्यः प्रणे योनिभृतइत्यमरः कर्म्मकरोपमः भृतकतुल्यः कर्म्म करोतीति टः कर्म्मशब्दाद्भृतौ टइति परः ॥ ९९ ॥

सतामरुष्करं पक्षी वैरकारं नराशिनं। हन्तुं कल हकारोऽसौ शब्दकारः पपात खं ॥ १०० ॥

इति टाधिकारः ॥

सता। एवमुक्का असौ जटायुः पक्षी खमाकाशमपपात पतितः किमर्थं नराशनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सता मरुष्करं धर्मे स्थितानाम्पीडाकरम् अरुःशब्दः पीडोपलक्षण परः दिवाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितुमनुकूलः अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भव ति कर्मण्यणः प्राप्तिरस्तीति टाधिकारउदाहृतः कियत्खमपपात यावति दूरे शब्दपातस्तावत्खमिति टाधिकारः समाप्तः ॥ १०० ॥

सतामित्यादि। एवमुक्का असौ पक्षी जटायुर्नराशिनं रा क्षसं हन्तुं खमाकाशं पपात जगाम कीदृशं राक्षसं सतां साधूनां अरुष्करं व्रणकरं पीडाकरमित्यर्थः पूर्व्ववट्टः निष्पतन्त्य इति वत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं ढातृषस्थित्यस्य कुम्भ कारइत्युदाहरणेन कुम्भादेःकृञः षण् अन्यस्मात्स्यकुष्टइत्यस्य विषयइति सूचितं तेनाच कुम्भादित्वात् षण् पक्षी कीदृशः कलह कारः कलहं करोतीति पूर्व्ववत् षण् एवं शब्दकारः शब्दपात मिति पाठे शब्दस्य पातोयत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातोगतिर्यत्रेति पतनक्रियाविशेषणं वा एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितं इति। टाधि कारः ॥ १०० ॥

अतः परं प्रकीर्णकाः ॥

धुन्वन् सर्व्वपथीनं खे वितानं पक्षयोरसौ। मांस शोणितसन्दर्शं तुण्डघातमयुध्यत ॥१०१॥

इतः प्रकीर्णकश्लोकानाह। धुन्वन्नित्यादि। असौ पक्षी अयुध्यत युध्यते स्म युधेर्द्दैवादिकस्य लङि रूपम् तुण्डघातमिति क्रियाविशेषणम् तुण्डेन चञ्च्वाघातो हननं यस्मिन् युद्ध इति करणे हन इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातम्भूमिं हन्तीति हिंसार्थानाञ्च समान कर्म्मकाणामित्यनेनापि न भवति समानकर्म्मकताभावात् अकर्म्मकत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्विता नं सर्व्वपथीनं सर्व्वः पन्था इति पूर्व्वकालेत्यादिना सः ऋक्पूरिति समासान्तोऽकारः सर्व्वपथान् व्याप्नोतीति तत्सर्व्वादेरित्यादिना खः मांसशोणितसन्दर्शङ्कात्स्न्र्येन मांसं शोणितञ्च दृष्ट्वा कर्म्मणि दृशिविदोः साकल्यइति णमुल् अमैवाव्ययेनेति सः ॥१०१॥

अथ प्रकीर्णकाः। धुन्वन्नित्यादि। असौ जटायुः खे आकाशे पक्षयोर्व्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा स्यात् तुण्डघातं यथा स्यात् तथा अयुध्यत युधोङ्युद्धे मांसरक्त योरर्थाद्रावणस्य सम्यग्दर्शोदर्शनं यत्र तुण्डस्याघातो यत्र चेति युद्धक्रियाविशेषणं दर्शघातौ घञन्तौ परे तु साकल्येन मांसं शो णितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशोणमुसाकल्ये एवं तुण्डेन हत्वा तुण्डघातं तृतीयान्तादासक्तौ णम् तुण्डघातेन युद्धसम्भवादा

सत्तिरत्र गम्यतइत्याह: विताम कीदृशं सर्व्वगामी पन्थाखेति सर्व्वपथ: पथ्यप्युरःसे इति अ: सर्व्वपथं व्याप्नोतीति ढघेकादिति ईन: ॥ १०१ ॥

न विभाय न जिह्राय न चक्लाम न विव्यथे। आघ्नानोविध्यमानोऽपि रणान्निववृते न च ॥ १०२ ॥

नवि। आघ्नान: पची प्रहरन् आक्रीयमहनइति तङ् न विभाय न भीत: तस्मान्न जिह्राय न लज्जित: सम्यङ्मया न हत इति न चक्लाम न क्लान्त: न विव्यथे व्यथोलिटीति सम्प्रसारणम् जितश्रमत्वात् विध्यमानोवा वाशब्दश्चार्थे परेण हन्यमानश्च न विव्यथे न पीडां भेजे सत्वाधिकत्वात् रणाच्च न निववृते न निवृत्त: अभग्नोत्साहत्वात्॥ १०२ ॥

नवीत्यादि। असौ पची आघ्नान: प्रहरन् न विभाय न भीत: मया ताडितोऽपि न हतइति न जिह्राय न लज्जते स्म न चक्लाम नासमर्थोबभूव न विव्यथे न पीडितो भवति स्म विध्यमान: परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्त: अभग्नोत्साहत्वात् सर्व्वत्र ठी व्यथेस्तु व्यथश्चेति जि: आघ्नानइति आत्माङ्कादहाघाहनुयमइति मं किम्वा आघ्नान: शत्रुहिंसनशक्त: शक्तिवयस्ताच्छील्ये इति शान:॥ १०२ ॥

पिशाचमुखधौरेयं सच्छन्नकवचं रथं। युधि कद्रथवद्भीमं वभञ्ज ध्वजशालिनं ॥ १०३ ॥

एते प्रकीर्णका:।

पिशा। युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पका द्न्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथवदयोश्चेति कदादेशः धुरं वहन्ति धौरेया अश्वाः धुरो यड्ढकौ पिशाचस्येव मुखं येषान्ते धौरेया यत्र रथे तम्पिशाचमुखधौरेयं सच्छोभनं शस्त्रकवचञ्च यस्मिन् तद्भीमम्भयानकन्तथा धुर्य्यत्वात् ध्वजशालिनं ध्वजवन्तं शालिन्शब्दः किन्प्रत्ययान्तस्तदन्तमाह अन्यस्त्वाह ध्वजेन शालितुं श्लाघयितुं शीलमस्येति णिनिः अनेकार्थत्वाद्धातूनामिति। एते प्रकीर्णकाः।॥ १०३॥

पिशाचेत्यादि। जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज कद्रथवत् कुत्सितरथमिव कत्कचत्रिरथवदइति कुशब्दस्य कदादेशः कीदृशः पिशाचस्येव मुखं येषां तेऽश्वाधौरेया यत्र धुरं वहतीत्यर्थे ढघेकादिति ष्णेयः सत् शोभनं विद्यमानं वा छत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थो वा भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शालिन्शब्दस्तदन्तायां अस्त्यर्थे शालिन् प्रत्यय इति वृद्धाः ध्वजेन शलते शोभते यद्वाहि स्वाश्विन् धातूनामनेकार्थत्वात् शालिरत्र दीप्त्यर्थ इति केचित् ध्वजेन शाडयितुं शीलं यस्येति डलयोरैक्यमिति स्मरणात् शाडृ श्लाघायामित्यस्य रूपमित्यपरे शलङ्कश्लाघ इत्यस्मात् ङ्शालृ कथन इत्यस्मादा णिनिरिति केचित्। इति प्रकीर्णकाः॥ १०३॥

## अतःपरं आमधिकारः ।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः। संत्या
जयाञ्चकाराथ सीतां विंशतिबाहुना ॥ १०४ ॥

इतःप्रभृत्याममधिकृत्याह सन्त्रा। अथैतस्मिन्युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् गत्यादिषु त्यजेरसङ्ग्रहात् तृतीयैव भवति कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं रावणन्त्रासितवान् अकर्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्मत्वम् आभ्यां हेतुमण्ण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् आमोऽमित्वमव्ययन्तत्वात् आमइति लेर्लुक् अयामन्तेत्यादिना अयादेशः आमकारान्तस्य कृत्संज्ञायाम्प्रातिपदिकत्वे प्रथमैकवचनम् तस्याव्ययादिति लुक् स्वरादिषु आमआमिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यतइत्यादिना लिट्परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति सुरांश्च पश्यतोयुद्धञ्जटायुः पिप्राय प्रीणितवान् शत्रुत्रासनं सीतात्याजनञ्च देवानाम्प्रीतेः कारणम् ॥ १०४ ॥

अथामधिकारः। संत्रेत्यादि स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतोयुद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां संत्याजयाञ्चकार त्यजेर्धोऽञौञेरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया त्रसेरकर्मकत्वात् प्रयोज्यकर्त्तुः कर्मत्वं उभयत्र प्रत्ययान्तत्वात् ण्जिादीत्याम् भस्कृञ्चामइति कृञो

ऽनुप्रयोगः ओर्गुरित्यनुस्वारः अपेअमनोरिति ञः अत्र विरा मस्योकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापः पिप्रा येति अनेकाच्धातोराम् नलिकाचइत्युपन्यस्तं विंशतिवाङ्क्त इति साभिप्रायपदेन रावणस्य बाहाधिक्यं जटायोर्वीर्य्याधिक्य ञ्च सूचितं ॥ १०४ ॥

असीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः। भूय स्तं वेभिदाञ्चक्रे नखतुण्डायुधः खगः॥ १०५ ॥

असी। असीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सा यामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्यम्भूते तृतीया निराकुलः पूर्व्वम्बाहुभिः सीताग्रहणे व्याकुलत्वात् भूयः पुनरपि खगः पक्षी ड्प्रकरणे अन्येष्वपि दृश्यतइति वचनात् गमेर्डः तन्नि श्चरं वेभिदाञ्चक्रे अत्यर्थम्भिन्नवान् वेभिद्यतेर्यङन्तादाम् नख तुण्डान्येवायुधानि यस्य॥ १०५ ॥

असीत्यादि। असीतस्त्यक्तसीतो रावणः आकुलः सन् शस्त्रैः कासाञ्चक्रे शुशुभे कासृञ्कुशब्दे धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः दीप्त्यर्थोऽपि दन्त्यान्तकासृङ्धातुरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम आस्वसीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकाशका सेति पक्षे आम् पूर्व्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं वेभिदाञ्चक्रे अत्यर्थं भिनत्ति स्म

कीदृशः नखतुण्डप्रहरणः भिदेर्मूवस्तुचपूर्वाटेत्यादिना यङ् प्रत्ययान्तत्वात् भिंशादीत्यादिना आम् यङोलुक् यङ्लुक्यलोपे चर्करीतञ्चेति निषेधात् न गुणः भिंशादीत्यादौ आमिति विषये सप्तमी तेन यङ्लुकि परस्मैपदविषये कृञ उभयपदित्वात् आत्मनेपदवदनुप्रयोगः खे गच्छतीति इनजनादिति डः ॥ १०५ ॥

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परं। न वा पलायाञ्चक्रे विह्रयाञ्चक्रे न राक्षसः ॥ १०६ ॥

हन्तुम्। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते चेष्टाञ्चक्रतुः दयादेरित्यादिना आम् विः पक्षी जनिघसिभ्यामित्यधिकृत्य वेञोडिच्चेत्यौणादिक इक् नवा नैव वाशब्द एवार्थे पलायाञ्चक्रे पलायितः उपसर्गस्यायताविति लत्वम् राक्षसश्च न दयाञ्चक्रे न दयते स्म पक्षिणञ्चैवं कथं व्यापादयामीति उभयत्रापि दयायासश्चेत्याम् ॥ १०६ ॥

हन्तुमित्यादि। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईहङ् चेष्टे परस्परं व्यतिलुनीत्युदाहरता व्यतीहारे परस्परशब्दोमनीषादित्वान्निपातित इति सूचितं विः पक्षी न पलायते स्म राक्षसोऽपि हन्तुं न दयां कृतवान् सर्वत्र भिंशादीत्याम् पलायाञ्चक्र इति परापूर्व्वस्यायधातोरूपं रेफस्य लत्वं मनीषादित्वात् मामाङ्नञ् नहिनोन वा इत्येते प्रतिषेधार्थाः एवार्थे अत्र वाशब्द इत्यन्ये ॥ १०६ ॥

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्व्वकिन्नराः। छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥ १०७॥

उपा। देवगन्धर्व्वकिन्नराद्रष्टुं युद्धमित्यामदति उपासाञ्चक्रिरे उपगताः पूर्व्ववदाम् क्रव्यात् रावणः क्रव्यमांसमत्तीति क्रव्यात् अदोनन्नइति विट् पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम् छलेन मायया प्रसह्य जेतुम् अशक्यतइति भत्तेनेति पाठान्तरम्॥ १०७॥

उपेत्यादि। देवागन्धर्व्वाः किन्नराश्च द्रष्टुं अर्थात् युद्धं उपासाञ्चक्रिरे उपगताः आसङ्उपवेशे व्विजादीत्याम् दीव्यतीति देवः पचादित्वादन् गानं धर्म्मोऽस्येति गन्धर्व्वो मनीषादिः नराकृतित्वात् कुत्सितोनरः किन्नरः ईषदर्थे किंशब्दइत्यन्ये क्रव्याद्रावणः छलेन कपटेन पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद त्याम्नत्वादाम् क्रव्यं मांसमत्तीति क्विप् ॥ १०७ ॥

प्रलुठितमवनौ विलोक्य कृत्तं दशवदनः खचरोत्तमं प्रहृष्यन्। रथवरमधिरुह्य भीमधुर्य्यं स्वपुरमगात् परिगृह्य रामकान्ताम्॥ १०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः॥

प्रलुठितमित्यादि। खचराः पक्षिणः खे चरन्तीति अधिकरणे

चरेष्टः तेषामुत्तमं जटायुं छत्तं छिन्नं लूनपचत्वात् अवनौ भुवि प्रलुठितं विलोक्य प्रहृष्यन् हर्षं प्राप्नुवन् निहतोविघ्नकारीति दशाननोरथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान् ॥ १०८ ॥

इति जयमंगलाख्यायां पंचमः सर्गः ॥

विलुठितमित्यादि। छत्तं छिन्नं लूनपचत्वात् अवनौ भूमौ विलुठितं पतितं खचरोत्तमं जटायुं विलोक्य प्रहृष्यन् हृष्टोभवन् रावणोरथवरं अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्कां अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः स्मरणादुपागतः तं कीदृशं भीमाधूर्य्याश्वाश्च धुरं वहतीति ढघेकादिति यः ॥ १०८ ॥

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सीताहरणोनाम मिश्रकः पञ्चमः सर्गः ॥

ओषाञ्चकार कामाग्निर्दशवक्त्रमहर्निशं। विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकां ॥ १ ॥

अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विवृत्याह ॥ ओषाञ्चकारेत्यादि अथ शब्दोवक्ष्यमाणतृतीयश्लोके यः सोऽत्र द्रष्टव्यः अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्त्रं दशाननमोषाञ्चकार ददाह उषदाहे उषविदेत्याम् अहर्निशं अहश्च निशा च सर्व्वोद्वन्द्वोविभाषैकवद्भवतीत्येकवद्भावादत्यन्त संयोगे द्वितीया अङ्गोनकारस्य रोऽसुपीति रत्वं कस्माद्दाह

इत्याह रावणोवैदेहीमव्यनिरुत्सुकां रामादन्यस्मिन् सर्व्वच निरभिलाषां विदाञ्चकार अगुणत्वं विदेस्तथेति विदेरगुणत्वात् गुणभावः ॥ १ ॥

श्रोषामित्यादि। अत्रापि सएवाधिकारः अपरिसमाप्तत्वात् कामोऽग्निरिव दशवक्त्रं रावणं अहर्निशं श्रोषाञ्चकार उषदाहे दरिद्राकासकाशेति पचे आम् अहश्च निशा च इति समाहार द्वन्द्वः सदाध्वादीति द्वौ दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्य्यातिशयविलोकनात् कामपीडानिर्भरत्वं द्योत्यते वैदेहीं रामादन्यस्मिन् सर्व्वच निरुत्सुकां निरभिलाषां विदाञ्चकार ज्ञातवान् कास्वाद्यामिति वेत्तेर्डाम् ङित्वान्न गुणः ॥ १ ॥

प्रजागराञ्चकारारेरीहास्वनिशमादरात्। प्रविभयाञ्चकारासौ काकुत्स्थादभिशङ्कितः ॥ २ ॥

प्रजागराञ्चकारेत्यादि। अरे रामस्य ईहासु चेष्टासु गुरोश्च इत्यकारः आदरादादरेण प्रजागराञ्चकार जागरितवान् शत्रुचिकीर्षितज्ञानपरोबभूवेत्यर्थः पूर्व्ववदाम् अनिशमिति निशाक्रियाविच्छेदोनास्ति यस्मिन् प्रजागरणइति निशेति क्रियाविच्छेदोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रविभयाञ्चकार प्रभीतवान् भीह्रीत्यादिनाम् श्लुवत् कार्य्ये धातोर्गुणायादेशौ अभिशङ्कितः किमियं करिष्यतीति ॥ २ ॥

प्रजेत्यादि। असौ रावणोऽरेरामस्य ईहासु चेष्टितेषु अनिशं निरन्तरं प्रजागरांचकार सावधानोबभूव आदरात् आदरं कृत्वा ल्यबर्थे पञ्चमी हेतौ वा काकुत्स्थात् प्रविभयांचकार अति भीतः ञिभीञिभीत्यां पञ्चाम्वाभीह्रीति पञ्चाम् श्लाइले क्वादीरि द्विः पुर्वृंइति गुणः भस्कृञ्चामइति कृञनुप्रयोगः अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः॥२॥

न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्ज्जितः। नाप्यूर्ज्जां विभरामास वैदेह्यां प्रसितोभृशं॥३॥

न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः तर्ज्जितः भर्त्सितोऽपि तयैवेत्यर्थात् नाप्यूर्ज्जां बलं विभरामास धारितवान् कृञिति प्रत्याहारग्रहणादस्तेरप्यनुप्रयोगः ह्रीधातोर्गुणायादेशौ डुभृञ्धारणपोषणयोः उभयत्रापि पूर्ववदाम् श्लुवच कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः भृशमत्यर्थं॥३॥

नजीत्यादि। अथ सीतायाअन्यनिरुत्सुकत्वज्ञानानन्तरं सीतामभ्यर्थ्य बहुधा अनुनीय तया तर्जितोभर्त्सितोऽपि रावणो न जिह्रयाञ्चकार ह्रीलिलज्जे ऊर्ज्जां बलमपि न विभरामास भृञिभृतिपुष्योः उभयत्र पूर्ववत्पञ्चाम् भृञादेर्द्विः श्लेरेइति भृधातोः श्लेर्द्विः आमोऽनुप्रयोगश्चस्तेर्भूर्न भवतीति परः स्फुमते भस्कृञ्चामइत्यत्र प्रत्ययार्थे इत्यस्य ग्रहणं नलस्तेः यदा व्याकरणा

न्तरसम्वादात् अस्तेरेवानुप्रयोगः कृतभ्वादेग्रस्यास्तेरनुप्रयोग स्य वैयर्थ्यं भुवोऽनुप्रयोगस्योक्तत्वात् तेनामोऽनुप्रयोगे भूररेरित्य स्य न विषयइति बोध्यं ऊर्ज्जेः सेमृक्तात्सरेरिति अप्रत्ययः स्त्री त्वञ्च ऊर्ज्जमिति पाठे क्विप् कुतइत्याह वैदेह्यां प्रविततभावका: तच्चिन्तया बलक्षयात्॥ ३॥

विदांकुर्व्वन्तु रामस्य वृत्तमित्यवदत् स्वकान्। रक्षांसि रक्षितुं सीतामाशिषञ्च प्रयत्नवान्॥ ४॥

विदाङ्कुर्व्वन्त्वित्यादि। स्वकानात्मीयान् शुकसारणादीन् अव दद्उक्तवान् किमित्याह रामस्य वृत्तमनुष्ठितं किन्तसीता गन्तुमु द्यमोऽस्ति न वेति विदाङ्कुर्व्वन्तु विदांकुर्व्वन्त्वित्यन्यतरस्यामिति निपातितं सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः सर्त्ती त्यङ् शासइदङ्हलोरिति शासेरुपधायाइत्वं प्रशिवसीति षत्वं प्रयत्नवान् प्रयत्नपरः। आमधिकारोगतः॥ ४॥

विदामित्यादि। रामस्य वृत्तं चेष्टितं भवन्तोविदांकुर्व्वन्तु जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् ज्ञात्वा र्थांग्याम्लुक्रन्विति वेत्तेर्ङाम् ग्यां छङनुप्रयोगएव प्रयत्नवान् सन् सीतां रक्षितुं रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये शासुअनुशिष्टौ शासुलिदुदिति ङः शासुक्लिद्ध्रुङे इति इत्वं क्विसात्तृतइति षत्वं। इत्यामधिकारः॥॥ ४॥

## अथ प्रकीर्णकाः।

रामोऽपि हृतमारीचोनिवर्त्स्यन् खरनादिनः। क्रोष्टून् समशृणोत् क्रूरान्रसतोऽशुभशंसिनः॥ ५॥

अथ प्रकीर्णश्लोकानाह। राम इत्यादि। हृतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् वृत्तादिलचणइटि प्राप्ते न वृद्भ्य इतीण् निषेधः क्रोष्टून् शृगालान् रसतः शब्दायमानान् अशृणोत् संश्रुतवान् सकर्म्मकत्वात् समो गमीत्यात्मनेपदं न भवति लङि रूपं क्रूरान् भीषणान् यतः खरनादिनः खरवन्नदन्ति कर्त्तरीति णिनिः अशुभशंसिनः अनिष्टसूचनशीलान्॥ ५॥

अथ प्रकीर्णकाः। राम इत्यादि। हृतो मारीचो येन स रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्व्वतः क्रोष्टून् शृगालान् समशृणोत् क्रोष्टूनां शब्दं शृणोति स इत्यर्थः रसत इति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्द एव श्रूयते नतु शृगालः तथापि शृगालस्यायं शब्द इति ज्ञाने शृगालोऽपि विषय इति तस्यापि ज्ञानकर्म्मत्वमविवादं औपचारिकोऽयं प्रयोग इत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थ इति केचित् वृद्भ्योनेम्येस्यसनोरिति वृतेरिम्निषेधः पे तत एव पं खरनादिनो गर्द्दभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्य्युपमानउपपदे णिन्निति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिन्निति परः समते ग्रहादित्वात् अतएव क्रूरान् भयदान्। अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये। तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः॥ ५॥

आशङ्कमानो वैदेहीं खादितां निहतां मृता। स शत्रुघ्नस्य सोदर्य्यं दूरादायान्तमैक्षत ॥ ६ ॥

आशङ्कमान इत्यादि। तथाविधाशुभश्रवणादाशङ्कमानो वितर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्तप्राणां अहो स्वयमेवायुःक्षयान्मृतां वा स रामः शत्रुघ्नस्य सोदर्य्यं भ्रातरं सोदराद्यः आयान्तमागच्छन्तमारादैक्षत दृष्टवान् ईक्षे लुङि ॥ ६ ॥

आशङ्केत्यादि। अमङ्गलश्रवणात् वैदेहीं राक्षसादिभिर्भक्षितां शृगालादिभिर्व्वा निहतां स्वयमेवायुःक्षयात् मृतां वा आशङ्कमानस्तर्कयन् रामः शत्रुघ्नस्य सोदर्य्यं लक्ष्मणं आयान्तं आराद्दूरादैक्षत ईक्षेर्ण्णि समानउदरे स्थितः सोदर्य्यः ढक्षेकादिति यः रूपनामगोत्रेत्यादिना पक्षे समानस्य सः कनिष्ठभ्रातृसम्बन्धोक्तत्वेन लक्ष्मणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्यत्वात् आराद्दूरसमीपयोः॥६ ॥

सीतां सौमित्रिणा त्यक्तां सध्रीचीं रक्षुमेकिकां। विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभं ॥ ७ ॥

एते प्रकीर्णकाः ॥

सीतामित्यादि। सौमित्रेरेकाकिनो दृष्टत्वाच्चियतमनेन त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थो रामः क्षये गृहे क्षीयतेऽस्मिन्निति अधिकरणेऽच् क्षेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यत इति ईषदित्यादिना खल् अमंस्त ज्ञातवान् कथं क्षये क्षेमं सुदुर्लभं

मिति आह सध्रीचीं सहचारिणीं न कश्चिदेकाकिनीं तिष्ठन्तीं सहाशृणोतीति ऋत्विगादिना क्विन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्यादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् अचइत्यकार लोपः चाविति दीर्घः कुतः चक्षुं चपलशीलां क्रियाशब्दत्वादूङ् न भवति एकिकां लक्ष्मणेन त्यक्तत्वात् एकादाकिनिच्चासहाये इति चकारात्कन् प्रत्ययश्चादितीत्वं। एते प्रकीर्णकाः॥ ७॥

सीतामित्यादि। सौमित्रिणा त्यक्तां अतएव एकिकां सीतां विज्ञाय काकुत्स्थः क्षये निवासे क्षेमं कुशलं सुदुर्लभं अमंस्त एकाकिनोलक्ष्मणस्यागमनात् तद्योगस्थानेऽपि कुतः क्षेमं सुदुर्लभमित्याह चक्षुमिति तां कीदृशीं चक्षुं चापशीलां चिपन्नवेति क्रुः तथा च चाया सा मृतेति सम्भाव्यते अतएव सध्रीचीं सदा सहचरीं न कश्चिदेकाकिनीं तिष्ठन्तीं सहाशृणोतीति क्विपि सहसम्भिरःसध्रिसमिति रीति सहस्य सध्रिःअचाञ्चतेर्गत्यर्थत्वात् नेदित्पूजार्यांश्चोरित्यस्य विषयाभावात् हसुङ्लोपोऽणाविति नकारलोपःद्विन्न्ञ्चाह इति ईप् अचोऽल्लोपोर्घश्चेति अकारलोपे निमित्ताभावात् यत्ल निवृत्तौ इकारस्य दीर्घः एकादाकिन्कावसहाये इति परः स्मते विकारसंघेत्यादिना असहाये स्वार्थे वा कः स्त्रियामाप् काप्य नाशीरके इति इत्वं चीयतेऽस्मिन्निति अन् चिनिवासगत्योः क्षये ऽपचयकाले इत्यर्थोवा। क्षयोरोगान्तरे वेश्मकल्पान्तापचयेष्वपीति विश्वः। एते प्रकीर्णकाः॥ ७॥

## अतःपरं दुहादिः।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्। रामं यथास्थितं सर्व्वं भ्राता ब्रूतेस्म विक्लवः॥ ८॥

अतोद्विकर्म्माधिकारः। सोऽपृच्छदित्यादि अकथितं चेत्यत्र दुहियाचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म्म लक्ष्मणमित्यकथितं कर्म्म याचमानः प्रार्थयमानः शिवं कल्याणं अर्थात्सीतायाः शिवं प्रधानं कर्म्म सुरान् देवान् इत्यकथितं कर्म्म भ्राता लक्ष्मणः सर्व्वं यथावत् स्थितं ब्रूतेस्म उक्तवान् सर्व्वमिति प्रधानं कर्म्म राममित्यकथितं॥ ८॥

अथ द्विकर्म्मकप्रकरणं। सइत्यादि। सरामः सीतां लक्ष्मणं अपृच्छत् दुहादेः कर्म्म हेतुः कर्म्मेति परः स्वमते याच्ञार्थत्वादीनां स्वभावाद्विकर्म्मकत्वमुक्तं कर्म्मद्वयन्तु तात्पर्य्यलभ्यमेव सीतामिति प्रधानं कर्म्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यतएव तेनात्र न लक्ष्मणमिति कीदृशोरामः सुरान् शिवं याचमानः दातुं प्रेरयन् अर्थात् सीतायाः शिवमिति प्रधानं कर्म्म भ्राता लक्ष्मणोविक्लवोविक्लवः सन् सर्व्वं यथास्थितं सीताप्रेरणादिकं रामं उक्तवान् वचनेन बोधितवान् राममिति हेतुकर्म्म॥ ८॥

सन्दृश्य शरणं शून्यं भिक्षमाणोवनं प्रियां। प्राणान् दुहन्निवात्मानं शोकं चित्तमवारुधत्॥ ९॥

संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत् कीदृशः प्रियां जानकीं वनं भिक्षमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म्म आत्मानमित्यकथितं आत्मनः प्राणान् त्यजन्निव॥ ९॥

संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य शोकं चित्तमवारुधत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेशयदिति वार्थः रुधिरोऽश्रावृतौ इरित्वात् शासुलित्युदिति पञ्चः कीदृशः प्रियां सीतां वनं भिक्षमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमिति कर्म्म हेतुः॥ ९॥

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्। आं
यत्र तापसान् धर्म्मं सुतीक्ष्णः शास्ति तत्र सा॥ १०॥

इति दुहादिर्द्विकर्म्मकः।

गतेत्यादि। यत्र यस्मिंस्तपोवने सुतीक्ष्णोनाम ऋषिः धर्म्मं शास्ति शिक्षयति धर्म्ममिति प्रधानं कर्म्म तापसानित्यकथितं तत्र तपोवने गता स्यात् सम्भावने लिङ् आकारोनिपातः स्मरणे किं कुर्व्वती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म्म आश्रमद्रुमानित्यकथितं अवचिन्वानेति चिनोतेः कर्त्त्रभिप्राये तङ्। दुह्यादिदण्डकोगतः। ॥ १०॥

गतेत्यादि। वक्ष्येवं विललाप यदिति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णोमुनिस्तापसान् धर्म्मं शास्ति तत्र सा गता स्यात् सम्भावने श्नसोरल्लोपः इति अस्तेरकारलोपः किं कुर्व्वती

आश्रमद्रुमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्ती पुष्पा ण्यादधाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते यदुक्तं मर्य्या दायामभिविधौ क्रियायोगेषदर्थयोः। यश्चाकारः सङ्कित्प्रोक्तो वाक्यस्मरणयोरङ्किदिति। आमिति क्वचित् पाठः सोऽपि स्मरणा र्थएव। इति द्विकर्म्मकाः॥ १०॥

अतः परं प्रकीर्णकाः।

आः कष्टं वत ही चित्रं हूं मातर्द्दैवतानि धिक्।
हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः॥ ११॥

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमनाविलप न्नाह आः पीडायां पितृवियोगपीडितः आः इत्याह अस्मद्वियोगे न पिता प्राणांस्त्यक्तवानित्यभिप्रायःकष्टमित्याह कष्टं कष्टं भर्त्तृम रणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह वत इति वत शब्दः खेदे सौमित्रिरपि तया सीतया अन्यादृशः सम्भावितइति विस्मितोहीत्याह हिशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्तइत्य भिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं यदेवंविधोऽपि स्खलतीति सर्व्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हूं मातरित्याह हूंशब्दः क्रोधे अथवा सर्व्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्राये णाह धिग्दैवतानीति धिक् कुत्सायां अविज्ञाय चक्षुषा प्राणांस्त्य क्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः अत्र द्रष्ट

व्योऽसीति हा शोके हे सीते क गतासीति भूशब्दात्प्राणिजातेरि त्यादिनोङ् उवर्णान्तमात्रस्य विधानादङभावः उपसर्जनत्वस्य पुनः स्त्रियामूङ् अन्तादिवच्चेति पूर्व्वं प्रत्यन्तवत्त्वात् प्रातिपदि कत्वं अतः सम्बुद्धौ ह्रस्वत्वं विललाप सएवं कृत्वा बहुनेकप्रकारं विलापं कृतवान्॥ ११॥

अथ प्रकीर्णकाः। आ इत्यादि। सीतावियोगेन पूर्व्वदुःखस्मर णात् पितृवियोगपीडितः प्राह आ इति आस्तु स्यात् कोपपीडयोः मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं कृच्छ्रं पतिमरणान्मद्वियोगाच्च मातुः कावस्था इत्यतआह वतेति खेदद्योतकोऽयं वतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावि त इति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीत्वा च्चौर्व्येण तथा तथाभिहितं तथापि लक्ष्मणेन तादृशः शापादा तुमनुचितइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं सर्व्वमिदं केकयीप्रभवमिति रोषादाह हूं मातरिति हूंशब्दः क्रोधे भर्त्सने वा तथाविधायामातुरपीदृशोऽकस्मात् मतिविपर्य्ययोदैवकृतए वेत्यतआह दैवतानि धिगिति धिक्शब्दोनिन्दाभर्त्सनयोः अविशे षत्वादिति भावः पितुर्व्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न त्रायते नवा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह हा पितरिति हा विषादशुग्गर्त्तिषु धिक्समयेत्यादिसूत्रस्य षष्ठ्य पोदत्वान्नाच तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात्पितृ सम्बोधनमतोन द्वितीयेति दुर्गः वस्तुतस्तु हाशब्दवाच्यं दुःखं स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयया भवि तव्यं एतत् सकलदुःखं यत्सङ्गत्या विस्मर्त्तव्यं सापि नास्तीत्याश

येनाह हे सुभ्रु क्वासीति कोपेऽपि भूयादृश्यं नासीति सुभ्रुपदस्याभिप्रायः एवं स्मृत्वा बरामेवब्धप्रकारं विलापं कृतवान् शोभने भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रूरीदीति ह्रस्वः॥ ११॥

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत्। अध्यासीत् संस्मरन्नित्थं मैथिल्याभरताग्रजः॥ १२॥

इहेत्यादि। इह प्रदेशे आसिष्ट उपविष्टा इदमोहः इदम इश् इह अशयिष्ट शयितवती आसेः शीङश्च लुङ् सखेलं सलीलं इतः प्रदेशादगमत् गतवती इत्थमेवंप्रकारं मैथिल्याः स्मरन् अधीगर्थेति कर्मणि षष्ठी भरताग्रजोरामोऽध्यासीत् ग्लानिङ्गतः ध्यायतेर्लुङ् यमरमेति सगिटौ॥ १२॥

इहेत्यादि। अत्र प्रदेशे सा सीता आसिष्ट शिलासङ्गउपवेशे अत्राशयिष्ट उभयत्र ठीमं इतः सकाशात् सखेलं सलीलं अगमत् लृदित्वात् ङः इत्थमेवंप्रकारेण मैथिल्याः संस्मरन् भरताग्रजोरामोऽध्यासीत् यमरमेति इमसनौ मैथिल्यादृति ढेषयोति कर्मणि षष्ठी ढयेद्धतीत्यादिना शतुर्योगे षष्ठ्याः प्रतिषेधेऽपि नञानिर्द्दिष्टस्यानित्यत्वाद्वा कर्मणि षष्ठी सम्बन्धविवक्षया स्मृत्यर्थयोगे कर्मणि वा षष्ठीति परः इह इत्यत्र कुतः ककुहेत्यादिना निपातितं॥ १२॥

इदं नक्तन्तनं दाम पौष्पमेतद्दिवातनं। प्रापेवोदध्य शाखायां प्रग्लायति तया विना॥ १३॥

इदमित्यादि। नक्तंतनं निशाभवं इदं दाम पुष्पमाला पुनर्द्दिवातनं दिवसभवं सायमित्यादिना ट्युट्युलौतुट् च पौष्पं पुष्पाणामिति तस्येदमित्यण् शुचेव शोकेनेव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रम्लायति म्लानिं गच्छति म्लायतेः शित्वाया देशः शाखायां प्रलम्बमानं म्लानिं गच्छन्तं वोच्छेदमुत्प्रेक्षितं कुतः शोकात्तया विना सीताविच्छेदेन ॥ १३ ॥

इदमित्यादि। इदं नक्तन्तनं रात्रिभवं पौष्पं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना शुचा शोकेन शाखायां उद्बध्य अर्थादात्मानं प्रम्लायति म्लानिं प्रयाति शाखास्थितां म्लानमालां वोच्छेदमुत्प्रेक्षितं इत्येवं विललापेति व्यवहितश्लोकेनान्वयः स्मरन्नेवं मुमोह सइति वक्ष्यमाणनवमश्लोकेन वा एवमुत्तरेष्वपि बोध्यं त्यचाद्यचिरेत्यादिना नक्तंदिवाशब्दाभ्यां अव्ययाभ्यां तनट् ॥ १३ ॥

ऐच्छिष्महि मुञ्चः सुप्तां यां मृताशङ्कया वयं। अकाले दुर्म्मरमहो यज्जीवामस्तया विना ॥ १४ ॥

ऐच्छिष्महीत्यादि। यां वयमैच्छिष्महि ईच्छितवन्तः ईच्छेः सेटो लुङ् मुञ्चः सुप्तां अविच्छिन्ननिद्रत्वात् मृताशङ्कयेति अनिष्टशंसित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवाम स्तदकाले दुर्म्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खल् ॥ १४ ॥

ऐचीत्यादि। वयं सुभ्रां यां प्रियां मृता नवेत्याशङ्कया मुहु र्व्वारंवारं ऐचिश्महि ईचेष्यामहि अनिष्टाशंसीनि बन्धुहृदया नीति मृताशङ्कितं एतेनानुरागातिशयः सूचितः अहो आश्चर्य्यं यत्तया विनापि वयं जीवामस्तदस्मादकाले जीवनस्यापूर्णकाले दुःखेन म्रियते ईषद्दुःखैरिति भावे खल्॥ १४॥

अचेमः परिहासोऽयं परीचां मा कृथामम। मत्तो मान्तर्द्धिथाः सीते मा रंस्थाजीवितेन नः॥ १५॥

एते प्रकीर्णकाः।

अचेमइत्यादि। परिहसनं परिहासः क्रीडा अयमचेमो न कल्याणकरः मम परीचां किं मामपश्यन् दुःखमस्ति नवेति मा कृथाः उश्चेति किचाद्गुणाभावः ह्रस्वादिति सिचोलोपः तस्माद्धे सीते मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां पञ्चम्यास्तसिः प्रत्ययोत्तरपदयोश्चेति मदादेशः लुङि स्थाध्वो रिचेति सिचः कित्त्वमिलश्च ह्रस्वादिति सिचोलोपः नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां मा कार्षीः रमेरात्मनेपदित्वात्तङ्। एते प्रकीर्णकाः॥ १५॥

अचइत्यादि। कदाचित् परिहासेनान्तर्हिता सा भवेदि त्याशङ्कोत्तरमिदं अयमन्तर्द्धानरूपः परिहासोऽचेमः अशुभः तवादर्शनेन मम दुःखमस्ति नवेत्येवं मत्परीचां त्वं मा कृथाः कृञस्थास् इगुकुमंडीस्तनिमिति सेः कित्वान्न गुणः ह्रस्वादिति सिलोपः मत्तः सकाशात् मा अन्तर्द्धिथाः मत्कर्तृकदर्शनाभावे

ऋद्धया व्यवहिता मा भूः धामन्त्राणि त्वादेर्ङ्गिरिति ङिरगुणत्वञ्च पूर्व्ववत्सिलोपः यतोऽपायेति यतोऽस्माद्भिस्तदपादानं सर्व्वत्र हेतु माह हे भीते नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां न कुरु तवाद दर्शनेन प्राणान्यास्यामीति भावः। इति प्रकीर्णकाः ॥ १५ ॥

## अतः परं सिजधिकारः।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमं। मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये ॥ १६ ॥

सिचं सापवादमधिकृत्याह। अहमित्यादि। यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्ते र्लुङि चेति वधादेशः अदन्तत्वाद्वृद्ध्यभावः तस्मान्मा घुक्षः न गोपय पत्युरात्मानं अन्तर्द्धावित्यपादानत्वं ख्यत्यात्यरुत्युत्वं गुहेः सलदृगुपधादनिटः क्सः होढः भभावकत्वषत्वानि षिपस्य विसर्जनीयः मा न श्लिक्षः मा न परिरब्धाः अपितु श्लिष मां हे प्रिये श्लिष आलिङ्गने क्सः ॥ १६ ॥

अथ सापवादसिजधिकारः। समते अधिकारः। अहमित्यादि। भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचं अहं न्यवधिषं हतवान् हनलीगतौ वधे अमि ख्याषिः हन्वधस्तीति वधादेशः हनादेःषेमृरत्यादौ वधवर्ज्जनात् षेमत्व खपनात् प्रत्ययन्तरत्वाद्वा इम् पत्युर्मत्तः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहूञ्संवृतौ उदित्वादेमूदिति इमोऽभावपक्षे हषषोऽनिमिजूङ्इति सक् होढः सभान्तस्येति घः षढोः कः

क्लिशादिति षः हे प्रिये प्रियं मां मा न क्लिशः अपितु अवश्यमेव प्रियमालिङ्ग्य द्वौ निषेधौ प्रकृतमर्थं गमयत इति न्यायात् क्लिशो क्लेशे आलिङ्गनेऽर्थे पूर्ब्बेण सक्॥ १६॥

मास्म द्राचीर्मृषा दोषं भक्तं मां मातिचिक्लिशः। शैलं न्वशिश्रियद्वा मा नदीं नु प्रत्यदुद्रुवत्॥ १७॥

मास्मेत्यादि। मृषा दोषं व्यलीकं दोषं मा द्राचीः मधीत्यर्थात् स्मोत्तरे लङ्चेति चकाराल्लुङ् सलद्गुपधेति क्सस्य न इश इति निषेधः इरितोवेत्यङ्भावे सिच् वृद्धिरित्यम् हलन्तलक्षणा वृद्धिः अस्तीत्यादिना यत्नं यतोऽहं भक्तस्ततो मां भक्तं मातिचिक्लिशः मातिक्लेशय क्लिशेर्ण्यन्तात् चिपि णिश्रीत्यादिना चङ् वा णिलोपः द्विर्व्वचनादिः पुनर्व्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्व्वतं किमथाशिश्रियदाश्रिता ततो नदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दोवितर्के चङ्॥ १७॥

मास्मइत्यादि। मृषा दोषं मास्म द्राचीः अर्थान्मयि दोषदर्शनाद्वा अन्तर्हितेत्याशङ्क्य इदमुक्तं दृहेर्माङ्ग्योगे मास्मेन घोव्याविति टौ सन्निधौ इशेर्वेर्जनात् इरित्वात् ङः विकल्पपक्षे च्लिः वर्द्धोऽकिदिति रत्वं अनिमित्ताद्भजवदेति श्रिः प्राज्ञाजेति षङ् भक्तं अनुरक्तं मां त्वं मातिचिक्लिशः नातिपीडय क्लिशेर्ण्णिः प्रेरणे णिश्रीत्यङ् द्वित्वं गुणः ण्यङुक्तःस्वः ण्रेर्लोपः निकटे यदि तिष्ठेस्तदा मदवनादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किं अशिश्रियत् आश्रिता

उत नद्यौ प्रत्यदुद्रुवत् प्रतिगता श्रिश्रिषेवने द्रगतौ अनयोरङि श्रुध्वोरिति इयुवौ नुशब्दोवितर्के॥ १७॥

ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्रुवत्। त्वं नो मतिमिवाधासीर्नष्टा प्राणानिवादधः॥ १८॥

ऐवाचमित्यादि। ऐशब्दोनिपातोऽभिमुखीकरणे वर्त्तते वाचं देहि प्रार्थनायां लोट् घ्वसोरेद्धावित्येत्वं किमितिचेदाह धैर्य्यं नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितं नष्टा अदर्शनं गता सती त्वन्नोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषा घेटश्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानद धः पीतवती कायस्याचेष्टत्वात् चङि रूपमाङ्लोपः॥ १८॥

ऐवाचमित्यादि। ऐ सीते वाचं देहि प्रार्थनायां गी देशादेशी देधेहौ तव हेतोः नोऽस्माकं धैर्य्यं असुस्रुवत् स्रुतं पूर्ववत् अङ् त्वं नोऽस्माकं मतिं बुद्धिं अधासीरिव पीतवतीव बुद्धेरपाटवात् कार्य्यान्तराध्क्रमाचोत्प्रेचेयं नष्टा अदर्शनं गता सती प्राणानपि त्वं अदधइव पीतवतीव देहस्य निस्चेष्टत्वात् धेट्पाने पूर्व्वेण विभाषितोऽङ् एचोशित्या उसेचीत्यालोपः अङोऽभावपचे थांसिः यमरमेति इमसनौ असस्याज्झरसीमइति सेर्लोपः भूस्था पित्रइमइति सेर्लुकि प्राप्ते धेशाक्वाधाघ्रइति पचे तदभावः नशअदर्शने क्तः नुणरधोमुचांनशइति क्तस्य नस्य हसुङ्न लोपोऽणावित्यनेन लोपः शच्छ्राजेति षङ् ऐ शब्दोऽयमव्ययो

ऽभिमुखीकरणे आह्वाने वा। एऐशब्दौ तु हेहैवत् स्मृत्यामन्त्रण
ह्नतिष्विति विश्वः॥ १८॥

रुदतोऽश्विश्वियच्चक्षुरास्यं चेतोस्तवाश्वयीत्। म्रिये
ऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितं॥ १९॥

रुदतइत्यादि। तवार्थे त्वां पश्यामीति रुदतोमम चक्षुरश्विश्वि
यत् उच्छूनं आस्यं मुखं चाश्वयीत् विभाषाधेट्श्व्योरिति चङ्
णिचौ चङ्यीयङ्ग्ह्यन्तेति न वृद्धिः इट् इटईटीति णिचोलोपः
गुणायादेशौ मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा
म्रियेऽहं म्रियतेर्लुङ्लिङोश्चेति चकाराक्तित्यात्मनेपदं रिङ्शय
गिति रिङ् अतोयत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा न वोचः
मा मा भाषिष्ठाः अपितु ब्रूहि अस्यतिवक्तीत्यङ् वचउम्॥ १९॥

रुदेत्यादि। तवादर्शनाद्रुदतो मम चक्षुरश्विश्वियत् उच्छून
मतिरोदनात् आस्यमपि अश्वयीत् ञिश्वीत्यादिना श्वेर्विभाषि
तोऽङ् अङोऽभावपक्षे श्वाशिः नेमेकाजादित्यादौ अश्विजागुरि
त्युक्तेर्गुणः त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा
अहं म्रिये भविष्यत्सामीप्ये वर्त्तमानत्वविवक्षा मृङ्प्राणत्यागे तु
दादित्वात् शः मृङ्ष्टीङ्श्चेमं चद्रिःशयग्लीपे अघोरितीयः अस्य
क्षेपणे वत्स्यस्येति ङः वच्यस्थिपतामिति अस्थः चिकीर्षितं कर्त्तु
मिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्मुञ्वोवा वचोऽरेदति
वचादेशः पूर्ववत् ङः वोचादेशश्च॥ १९॥

लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणं।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथं॥ २०॥

लक्ष्मणेत्यादि। हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्यदुक्तवती इदमनेनाप्रियमाचरितं पूर्व्ववदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्म्मणि लोट् रिङ्कित्यादिना रिङ्॥ २०॥

लक्ष्मेत्यादि। हे लक्ष्मण यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वं आचक्ष्व कथय चक्षिङः प्रार्थनायां गोत्व चदादित्वात अपोलुक् स्वादेःसोलोपइति ककारलोपः षढोःकःसे किलादिति षः ख्याञ्कथने चक्षिङः ख्याञ् वा वक्ष्मेति ङः उस्येवीत्यालोपः अज्ञाते दोषे प्रतिसमाधानं तदपमार्ज्जनार्थं कर्म्म कथं मया क्रियतां कर्त्तव्यं स्तनोर्थगिणाविति यकि कृते घेऽज्यस्इति सामान्यविधिं वाधित्वा ऋद्रिःशयग्ढी पइति विशेषविधिः रिलेऽपि पूर्व्ववाधितत्वात् विकृतत्वाद्वा न तेन दीर्घः किम्बा यङ्गुक्येचर्द्रीरित्यत्र दीर्घकरणेन ऋद्रिःशयग्ढी पइत्यनेन कृतरेर्दीर्घोनस्यादिति ज्ञापितं यङ्गुक्ये घेऽज्यस्इत्यनेन चौ अस्वावीर्घाविव्यनेन चेष्टसिद्धेः॥ २०॥

इह सा व्यलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः। इहास्यं द्रष्टुमाङ्क्तं तां स्मरन्नेवं मुमोह सः॥ २१॥

इहेत्यादि। इह प्रदेशे सा सीता गन्धैर्व्यलिपत्समालिप्तवती मामात्मानञ्चेत्यर्थात् इह स्थान्तो क्रीडापूर्व्वकमभ्यषिचत् इष्ट यत्नमुक्तसलिलेन माममिमुखं सिक्तवतीत्यर्थः चलं इह द्रष्टुं तामाह्वं आह्वतवान् लिपिषिचिह्वश्चेति श्रेरङ् एवं स्मरन् मुमोह मोहं गतवान्॥ २१॥

इहेत्यादि। इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मानञ्चे त्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः ञिलिपोञ्शलेपे इह स्थान्तो सती सा जलैः क्रीडापूर्व्वकं अभ्यषिचत् अर्थात्मां षिचप शोत्तरणे शीकःस्तुस्तुभेत्यादिना अमुव्यवधानेऽपि षलं इह द्रष्टुं तामहं आह्वं आह्वतवान् ह्वेञ्स्पर्द्धे सर्व्वत्र वक्ष्येत्यादिना ङः सरामएवं स्मरन् मुमोह मोहं गतः स्थान्तीति आदीपोरिति विभाषितनुण्॥ २१॥

तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन्।
अलिप्तेवानिलः शीतोवने तं न त्वजिह्लदत्॥ २२॥

तस्येत्यादि। तस्य रामस्य स्वान्तं मनः क्षुभ्रस्वान्तेत्यादिना निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपितवान् परस्मै पदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पेनाङ् स्वरितञितइति क्रियाफलविवक्षायामात्मनेपदं काष्ठमिव स्वान्तं ज्वलन् अतिवर्त्तमानः अनिलोवायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव अङ्भावपक्षे झलोझली

ति सिचोलोपः नतु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेरद्धृतत्वात् ह्लदेर्ण्यन्ताच्छिश्रीति चङ् ॥ २२ ॥

तस्येत्यादि । शोकएवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य स्वान्तं मनः काष्ठमिवचिन्तया नीरसत्वात् अलिपत ददाह यद्यपि लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपोदाहएव पर्य्यवस्यति धातूनामनेकार्थत्वाद्वा शीतोऽपि अनिलः वनेतं रामं अलिप्तेव स्पृष्टवानिव मान्द्येन सम्यगस्पर्शनात् किम्वा वह्निना अलिप्त ददाह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् वक्ष्य स्येत्यादिना आत्मनेपदे लिपादेर्ङोविभाषितः पक्षे यांषिः झस्य स्यादिति सिलोपः ह्लादीङ्मोदने ण्यन्ताङ्ङः स्वः स्वेः सम्वत् ॥२२॥

स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना ।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः ॥ २३ ॥

स्नानित्यादि । असौ रामोदयितया विना शोकमूर्छितः शोकेन मोहं नीतः स्नातुमारब्धः मूर्च्छेर्हेतुमण्णन्तस्य रूपं स्नाशौचे शतृ प्रत्ययः रुदन्नम्भः सलिलं अभ्यषिचत क्षिप्तवान् शिरस्यञ्जलिना अथ स्नातः पितृभ्योवारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्व्ववद्वि भाषाऽङ् सिचिरत्रोत्सर्गे वर्त्तते ततश्चार्थान्तरवृत्तित्वाज्जलस्य कर्म्मत्वं ॥ २३ ॥

स्नानेत्यादि । दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो रुदन् स्नान् स्नानं कुर्व्वन् अम्भोऽभ्यषिचत मन्त्रैः संस्कृतवान् स्वशिरसि अञ्जलिना क्षिप्तवानित्यर्थोवा तथा स्नातः पितृभ्योवारीणि

अभ्यषिक्त दत्तवान् पित्रर्थं सिक्तवान् वा धातूनामनेकार्थत्वात् सिचेः संस्कारक्षेपदानवाचकत्वं तेन जलस्य कर्मत्वं अभ्युक्षणे कर त्वं यथा जलेन सिञ्चतीति पूर्व्ववत् ङः गीकइति षत्वं मूर्च्छार्थं मोहे उक्तृये न्यन्तात् क्तः केवलात्तु क्तवत्तोरादितइम् न स्यात् मूर्च्छा जाताऽस्येति इतोऽस्यजातइति इतोवा ॥ २३ ॥

तथार्त्तोऽपि क्रियां धर्म्म्यां सकालेनामुचत् क्वचित् ।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति ॥२४॥

तथेत्यादि। सरामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्यां क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतोमहतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्व्वाद्दर्त्तेऋणोतेर्वा निष्ठायां ऋतिधातो वृद्धिः मुचेः ऌदनुबन्धत्वादङ् ष्ञ्ञः शच् रिङि यक्ते ॥ २४ ॥

तथेत्यादि। तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि सरामः क्वचिदपि काले धर्म्म्यां धर्म्मादनपेतां क्रियां नामुचत् न त्यक्त वान् मुचृश्पमोक्षे ऌदित्वात् ङः आङ्पूर्व्वादर्त्तेः क्तः गेर्धा रनेधिणइति त्रिः हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसीदति नापगच्छति क्रियेति कुःअस्येति शः स्त्रीत्वञ्च ऋद्धिःश्रुध्वोरितीयः यदकरणे प्रत्यवायः सा नित्या ॥ २४ ॥

आक्रान्त समुक्तः क्रूरान् मुक्तराक्रत राक्षसान् ।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवं ॥ २५ ॥

आक्रातेत्यादि। पुनः पुनरभिभवितुं क्रूरामाक्रान्त आक्रान्तवान् तथा राक्षसानाक्रत पूर्व्ववत् विकल्पः स्पर्द्धायामाङ इत्यात्मनेपदं कथमाक्रतवानित्याह हे सीताद्रुहः सीताहिंसकाः क्रूरा राक्षसावा एत आगच्छत आङ्पूर्व्वादिणो लोट् संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोतीत्यर्थे णिच् तदंताल्लोटः परस्मैपदं अर्थयात्मनीयामित्यस्य तु स्वार्थिकण्यन्तस्य सर्व्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥ २५ ॥

आक्रेत्यादि। स रामो मुहुर्व्वारंवारं क्रूरान् आक्रान्त अर्थात् युद्धाय राक्षसानपि आक्रत स्पर्द्धायामाङ इति सं पूर्व्ववत् कस्मै कथमाक्रत इत्याह हे सीताद्रुहः सीताहिंसकाः यूयं एत आगच्छत आङ्पूर्व्वादिणो गी संख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् लेः कृत्याख्यानेञिरिति कर्त्तो ञिः ञीमंत्वेति डित्त्वे टेर्लोपः अर्थकङ् याचन इत्यस्य वा रूपं कचिदात्मनेपदिनोऽपि परस्मैपदितेति न्यायात् केचित्तु चुर्भ्योञिर्व्वेति ञेरभावपक्षे ञित्वाभ्वं ञीदुभयपदमेवेत्याहुः ॥ २५ ॥

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः। अद्युतच्चेन्दुना सार्द्धं तां प्रभूत गता यतः ॥ २६ ॥

स्वपोषमित्यादि। हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् स्वपोषमपुषत् पुष्टवती स्वेपुष इति णमुल् यथाविध्यनु

प्रयोगः तां प्रब्रूत कथयत यतोयच्चोआचाहित्वास्मिः गता यस्य द्युतत् द्योतितेस्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात्॥ २६॥

स्वपोषेत्यादि॥ एवंप्रकारेण मृगादीनप्याक्राक्षेति सम्बन्धः हे पक्षिणां मृगाणाञ्च शावकाः शिशवोया सीता युष्मान् स्वपोषं अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्व्वात् पुषेर्णम् तदनुप्रयोगस्य या इन्दुना सार्द्धं अद्युतत् तस्याद्योतनेन इन्दोः स्वभावेन गुणीभूतत्वात् ततोऽप्युत्कर्षः सूच्यते सार्द्धंशब्देन समानत्वं वा लक्ष्यते उभयत्र शासुलिद्युत्पुषादेर्रिति ङः पे ङ विधानादेव द्युतेः पं उक्तञ्च अतएव पंतां प्रब्रूत वदत त्वत्स्व यास्वस्येव कथनं किमर्थं इत्याशङ्कायामाह गतेति यस्माद्ग ता अन्यत्र मां त्यक्त्वेत्यर्थात् केचित्तु यतोयच गतां तं देशञ्च ब्रूते त्यध्याहरन्ति केचित्तु या यतोयत्वात् अपुषत् इन्दुना सार्द्धं साम्यं गता या अद्युतच्च यतोऽयत्ने इत्यस्य क्विपीत्याऊः केचित्तु हे पक्षिमृगशावकाः गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे क्तः न यतन्ते इति अयतः कर्त्तरि क्विप् गताय अयतोऽयत्न वन्तः स्थिराः सन्तइत्यर्थइत्याऊः गताय नास्ति यत् यत्नो येषां तादृशाः सन्तइत्यन्ये॥ २६॥

गिरिमन्वस्थपद्रामोलिप्सुर्ज्जनकसम्भवां। तस्मिन्ना योधनं वृत्तं लक्ष्मणायाशिषन्महत्॥ २७॥

गिरिमित्यादि। गिरिं लक्षीकृत्य गतः स्वदित्वादङ् किमर्थं

लब्धुमिच्छुः सनिमीमेत्यादिना इस् अत्र लोप इत्यभ्यासलोपः खरि चेति चर्त्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः ऋदोरप् जनकः सम्भवो यस्यास्तां सीतां अस्मिन् गिरौ आयोधनं युद्धं महदिति शयलात् वृत्तं लक्ष्मणायाशिषत्कथितवान् क्रियायोगे चतुर्थी सर्त्तीत्यादिनाऽङ् शास इदङ्हलोरितीत्वं शासिवसीति षत्वं कथमकथयदित्याह ॥ २७ ॥

गिरीत्यादि। जनकसम्भवां सीतां लब्धुमिच्छू रामो गिरिमनुलचीकृत्य असरत् स्रुपीगतौ स्रदित्वात् ङः लभेः सनिमिमीमा देत्यादिना अकारस्य इस् खिलोपश्च स्वादेः सोलोपश्च भपश्चसे रिति पः सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनका त्सम्भवनं यस्यादिति वा तस्मिन् गिरौ वृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थ स्तत्र चतुर्थीति परः शासुअनुशिष्टौ शासुलित्युदिति ङः शासु ङिद्धस्ङेइति इत्वं किलादिति षत्वं ॥ २७ ॥

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवं। इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत्तयोः ॥ २८ ॥

सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते हे सौमित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतामा गताविति ध्रुवं निश्चितं उत्प्रेक्षायामित्यन्ये आङ्पूर्व्वादर्तेरादादिकादेवाङ् पुषादिसूत्रे शास्तिसाहचर्य्येण तस्यैव ग्रहणात् ऋदृशोऽङीति गुणः आङ्विनाप्यडागमे कृते रूपमिदं हन्तेः सनि

अञ्झनगमां सनीति दीर्घः अभ्यासाचेति घलं कुतो ज्ञातमित्याह इदमभ्यग्रं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्युतिरचरणे अकर्मकोऽत्र इरनुबन्धत्वादिरितोवेत्यङ् सीतां भचयितुं तयोरेव विवादोवृत्तइति भावः॥ २८॥

सीतामित्यादि। इत्येवं लक्ष्मणायाग्निषदिति श्लोकचतुष्टयेषु सम्बध्यते हे सौमित्रे ध्रुवं निश्चिते उत्प्रेक्षे वा सीतां हन्तुमिच्छू राक्षसावारतां आङ्पूर्व्वात् ऋलिगत्यांइत्यस्मात् ऋप्रापणेचेत्यस्माद्वा वक्ष्यस्येत्यादिना पचे ङः ऋशोर्गुणरिति गुणः आङा विनापि रूपमेतत् हन्तेः सनिर्घोऽञ्झनिङ्गामिति दीर्घः खेर्घोघः कुतोज्ञातमित्याह तयोरेव संप्रहारे युद्धे इदं अभ्यग्रं अभिनवं शोणितं अच्युतत् गलितं च्युतिरचरणेऽकर्मकः इरित्वात् शासुलिद्युदित्यादिना पचे ङः सीतामत्तुं तयोरेव विरोधोजातइति भावः॥ २८॥

इदं कवचमच्योतीत् साश्वोऽयं चूर्णितोरथः। एह्यमुं गिरिमन्वेष्टुमवगाहावहे द्रुतं॥ २९॥

इदमित्यादि। इदं कवचमच्योतीत् भ्रष्टं अङभावे सिजेव भवति अयं रथः साश्वश्चूर्णितआस्ते यतश्चैवं तस्मादेहि आगच्छ द्रुतं किं पश्चाद्विलम्बसे अमुं गिरिमवगाहावहे विलोडयावः किमर्थं अन्वेष्टुं सीतामित्यर्थात् एतत्सर्व्व पर्व्वतसमीपे कथ्यते॥ २९॥

इदमित्यादि॥ कवचमिदं अच्योतीत् भ्रष्टं इरित्वात् ङाभावपक्षे च्यांसिः अश्वेन सह चूर्णितोऽयं रथस्यास्ते यतएवं तस्मात्

द्रुतं शीघ्रं एहि आगच्छ आङ्पूर्व्वस्येणो रूपं अन्वेष्टुमथात् सीतां अमुं गिरिं आवां अवगाहावहे सर्व्वतः पर्य्यटावः॥ २८॥

मन्युर्मन्ये ममास्तम्भीद्विषादोऽलभदुद्यतिं। अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत्॥ ३०॥

मन्युरित्यादि। मन्युर्मम शोकः मन्ये इत्यहं सशोकः सुहृज्जनेऽस्तम्भीत् स्तम्भुरान् विषाद उद्यतिमलभत् अत्र पक्षे अनुनासिक लोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोकादजरत् जीर्णं स्वकार्य्या करणात् ऋदृशोऽङीति गुणः जॄस्तम्भित्यादिना विकल्पे॥ ३०॥

मन्युरित्यादि। हे सौमित्रे मन्युः शोकोमम मन्ये स्कन्धमूर्द्धशिरादयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भोनाम व्याधि र्जातइत्यर्थः मन्युशोकौ तु शुक् स्त्रियां पश्चाद्ग्रीवाशिरामन्येति चामरः विषाद उत्साहविपर्य्यय उद्यतिं उद्यममलभत् लभधातुः सौत्रिकः शासलिट्ठदिति वाङ् इसुनङ् लोपः ङाभावपक्षे ञ्सिः उत्पूर्व्वाद्यमेः क्तौ वनतनाद्यनिमामिति मलोपः मम प्रज्ञा बुद्धिस्त्वाजारीत् कर्त्तव्यमूढत्वाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमत्वाज्जीर्णमिव पूर्व्ववदाङ् इञ्जोर्णुरिति गुणः पक्षे सिः ञजवदेति ञिः तथेति समुच्चयाभ्युपगमसादृश्येष्विति वृद्धाः॥ ३०॥

गृध्रस्येमावश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण। जिघत्सोर्नूनमापादि ध्वंसोऽयं तां निशाचरात् ॥ २१ ॥

गृध्रस्येत्यादि। हे लक्ष्मण इह प्रदेशे गृध्रस्य पक्षौ कृत्तौ छिन्नौ अश्वतां शूनौ पूर्व्ववदङि श्वयतेरः इति वीक्षस्व नूनमवश्यं सीतां जिघत्सोः रत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घसॢ निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपद इति च्लेश्चिणादेशः तशब्दस्य चिणो लुक् ॥ २१ ॥

गृध्रेत्यादि। हे लक्ष्मण इह स्थाने गृध्रस्य कृत्तौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीक्षस्व पश्य टुओश्विगतिवृद्ध्योः पूर्व्वेण वा ङः वच्यस्यश्विपतामिति श्वः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदस्तनोपचेदति कर्त्तरि इण् इणस्तनलोपः जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः घसॢरःस निति अदेर्घसॢः सत्यरे ॥ २१ ॥

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात्। अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापरि भानवत् ॥ २२ ॥

क्रुद्ध इत्यादि। तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिवध्योश्चेति न वृद्धिः त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताद्रुहोऽपि नश्यन्ति इत्यभि प्रायेण दुःस्थमबोधि बुध्यते स्म किम्वा रामस्य दाराश्च्रियन्ते

ब्रह्मान्येषु का कथा इति दुःखं त्रैलोक्यमबोधि दीप्तैस्तेजोभिरे तुभिरापूरि वर्द्धते स्म भानुवद्दादित्यवत् दीप्तैरिति भावे निष्ठा सर्व्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिण्॥ २२॥

क्रुद्ध इत्यादि। लक्ष्मणायैवमुक्त्वा रघुव्याघ्रो रामः क्रुद्धः सन् अदीपि जज्वाल चणाच रक्षैभ्योऽजनि जातः त्रैलोक्यमेवं दुःखं अबोधि ज्ञातवान् शत्रुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्यामीत्याशयः येनाहमपि दुःखः कृतस्तेन सुतरां जग दुःखमिति वा दीप्तैस्तेजोभिरेतुभिरापूरि वर्द्धते स्म भानुरिव दीप्तैर्भावे क्तः सर्व्वत्र पदस्तनोण्घेदित्यादिना कर्त्तरि पाक्षिक इण् इणस्तनलोपः जनवधःयेम इत्यादिना जनेर्वृद्ध्यः॥ २२॥

अताय्यस्योत्तमं सत्वमप्यायि कृतकृत्यवत्। उपाचायिष्ट सामर्थ्यं तस्य संरम्भिणोमहत्॥ २३॥

अतायीत्यादि। अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्य सनयोरविकारत्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्म अप्यायि दंहितं कृतकृत्यवत् समाप्तक्रियवत् हस्ततलस्थं शत्रुवधं मन्य मानस्य उभयत्रापि पूर्व्ववच्चिण् तस्य रामस्य संरम्भिणः शत्रुवि षये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवोपचीयते स्म चिनोतेरचः कर्म्मकर्त्तरीति चिण् पक्षे चिण्वदिट्चेति॥ २३॥

अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावोवा अतायि सततं बभूव नान्तरा विच्छिद्यते स्म उत्तमं व्यसनेऽपि अविकृतं ता पृच्छातनसम्पत्तयोः अप्यायि वर्द्धते स्म कृतकृत्यवत् समाप्तक्रिय इव

क्रोधोत्साहाधिक्यात् विहितोवैरिवधइत्यध्यवसायात् प्यायीङ् वृद्धौ उभयत्र पूर्ववदा इण् संरम्भिणः शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म इनयड् इत्रवदिति चिनोतेः सेर्म्मिण् कर्मकर्त्तरि चायृङ्निशाने ऽर्थे इत्य स्यानेकार्थत्वात् कर्त्तर्य्येवेदं रूपमित्यन्ये सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ २३॥

अदोहीव विषादोऽस्य समरुद्धेव विक्रमः। सम भावि च कोपेन न्यश्वसीच्चायतं मुहुः॥ २४॥

अदोहीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदोहीव स्वयं क्षरितइव अथवा अदोहीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्मवदित्यादिना कर्मवद्भावेन प्राप्त स्य चिणो नरुधइति निषेधःतेन सिजेव भवति झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशीति धत्वजत्वे कोपेन च समभावि सम्भूतं चिण्भावकर्मणोरिति भावे चिण् चैलोक्यदौः स्यावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिर्न भवति मुहुरिति सर्व्वत्र योज्यं॥ २४॥

अदोहीत्यादि। अस्य रामस्य प्रागुत्पन्नोविषादः स्वयमेवा दोहि इव क्रोधातिशयात् स्वयं क्षरितइव पूर्य्यते स्मेवेत्यन्ये वेषज दुहइति कर्मकर्त्तरि वा इण् विक्रमोऽपि समरुद्धेव स्वयमेवान्तः प्रविष्टइव नतपरुधसहेति कर्मकर्त्तरि इण्निषेधः झषस्तादि

ति सिलोपः यस्य कोपेन समभावि सम्भूतं रतमोर्यगिणाविति भावे इण् कोपात् मुहुर्व्वारंवारं आयतं दीर्घं यथा स्यात्तथा रामोऽप्यश्वसीत् श्वसादेःसेमइत्यादौ श्वयन्वर्ज्जनात् न वृद्धिः। इति सिजधिकारः॥ २४॥

## श्नम्प्रकरणं कथ्यते।

अथालम्ब्य धनूरामोजगर्ज्ज गजविक्रमः। रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्व्वतान्॥ २५॥

इतःप्रभृति श्नम्विकरणमधिकृत्याह। अथेत्यादि। अथानन्तरं रामोधनुरालम्ब्य गृहीत्वा जगर्ज विस्फुर्ज्जितवान् धनूराम इति रुलोपइति दीर्घः गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्व्वतान्॥ २५॥

अथ श्नम्व्याधिकारः। स च रुधादेः श्नम्। अथेत्यादि। अनन्तरं गजपराक्रमोरामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज सिंहनादं चकार किं कृत्वा जगर्ज्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि अर्थात् शरैः मृदुत्वादेव ममेदृशं कर्म्म संवृत्तं इदानीं महतां दण्डभयादन्योऽपि सीतां दास्यति नच पुनरेवं कोऽपि करिष्यतीति भावः अतएव न तृणेढ्मीति लोकोऽयमिति वक्ष्यति कुलपर्व्वतान् पृथिव्याअवस्तम्भकान् पर्व्वतानपि अहं भिनद्मि विदारयामि रुधिरौञ्आवृतौ ञधौभिदिर्भिदि दिवसुतुदरुधेति श्नमेव स्नानादिवत् प्रकृतिप्रत्य

ययोः साहाय्यकारित्वान्न शप् दिवसुतुदरुधक्राद्देरिति षष्ठ्येकवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयोऽपरे निर्दिष्टा इत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तं एभ्य इति तेन सूत्रे षष्ठीनिर्द्देशात् रुधादेः श्रण् णित्वादन्त्याचउत्तरः एभ्य इति वृत्तौ पञ्चमीनिर्द्देशादन्त्ये प्रकृतेरुत्तर इति सोऽर्थं न च सूत्रे पञ्चमीनिर्द्देशेऽपि णित्वात् श्रण् रुधादेरन्त्यादचः परे भवितुमर्हति णमित इत्यस्य षष्ठ्यन्त एव विषयत्वात् शासुलिह्य्त्युषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परोऽङः न तु ङित्वादन्त्यस्य स्थाने इत्यादिदर्शनात् षष्ठीनिर्द्देशेऽपि पञ्चम्यर्थोगम्यते तथाहि अनडुत्पुंपयोलक्ष्मीनावामेकत्ववाचिनां। नित्यं कः स्याद्बहुव्रीहौ वा स्याद्द्वित्वबहुत्वयोरिति। अन्यत्रापि नित्यात्वतां स्वरान्तानां सृजिदृश्योश्च वेट्थलि। ह्वचि नित्यानिटःसुस्रोदृव्येऽदां नित्यमिट् थलीति ॥ २५ ॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान्।
क्षुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥ २६॥

रिणच्मीत्यादि। जलधेस्तोय रिणच्मि रिक्तीकरोमि रिचिर विरेचने दिवः स्वर्गात् सुरान्विविनच्मि पृथक्करोमि विचिर पृथग्भावे क्षुणद्मि चूर्णयामि सर्पान् पाताले क्षुदिरपेषणे अट्कुप्वाङिति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि छिदिरद्वैधीकरणे ॥ २६ ॥

रिणच्मीत्यादि। जलधेः समुद्रस्य तोयं रिणच्मि रिक्ती करोमि रिचिर्भिधोविरेके रैकात् अणोमलं सुरान् दिवः स्वर्गात् विविनच्मि पृथक्करोमि विचिर्भिधौञ् पृथकले विपूर्व्वः सुरा योगात् सुराः अर्श्यादित्वादः तदुक्तं सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुताइति किम्वा सुरन्ति भान्ति ईशते वा इति सुरा सुरश्रैश्ययोरित्यस्मात् इगुपधज्ञाप्रीकिरःकः इति कः पाताले सर्पान् क्षुणद्मि चूर्णयामि अधोक्षुदिर्च्छुदि क्षुदसम्पेषणे मकारावस्थं पतन्ति लोका अस्मिन्निति पातालं निपातनात् क्षणदाचरान् छिनद्मि द्वैधीकरोमि छिदिर्द्वैधीकरणे ॥ २६ ॥

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलं।
शुष्कपेषं पिनष्म्युर्व्वीमखिन्दानः स्वतेजसा ॥ २७ ॥

यममित्यादि। यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः सम्बर्द्धयन् ञिइन्धीदीप्तौ आत्मनेपदिनोलटः शानच् आमलोपः अनोरलोपः उर्व्वीं शुष्कां कृत्वा चूर्णयामि पिष्लृसंचूर्णने शुष्कचूर्णरुक्षेषुपिषइति णमुल् अखिन्दानः स्वतेजसा दैन्यमगच्छन् अपरिश्राम्यन् खिद दैन्ये पूर्व्ववल्लोपः ॥ २७ ॥

यममित्यादि ॥ यममपि कालेन मृत्युना अहं युनज्मि सङ्गी त्यर्थः युजिर्धाञ्युतौ अस्त्रकौशलं समिन्धानः वर्द्धयन् इन्धीञ् धञ्दीप्तौ शानः नणोमलोपइत्युक्लोपः नणोमेणाविति नस्य अकाररहितत्वं उर्व्वीं शुष्कपेषं पिनष्मि चूर्णयामि धौपिष्लृ

चूर्णने प्रुष्टचूर्णत्वात् पिपेषम् गतार्थत्वे तदनुप्रयोगश्चेति परः संमते चकारेत्यस्य योगविभागात् चेप्रुष्टयोगकवदति प्रुषेः कस्य कः खतेजसा अखिन्द्रामः दैत्यमभजन् अपरिशा म्यन् वा खिदरूध्यैर्दैन्यके मणोमेऽणो ॥ १७ ॥

भतिं तृणद्मि यक्षाणां छिनद्मीन्द्रस्य विक्रमं। भन ज्मि सर्व्वमर्य्यादास्तनच्मि व्योम विस्तृतं॥ १८ ॥

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणद्मि उत्सादयामि उछ दिरहिंसानादरयोः इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिदि हिंसायां इदितोनुम् तस्य आस्रलोपः सर्व्वमर्य्यादास्र व्यवस्थाः सर्व्वेषां भनज्मि मर्द्दयामि भञ्जोआमर्द्दने आस्रलोपः तनच्मि व्योम विस्तृतं संकोचयामि तृन्न आच्छादने कास्तेन चौरादिकस्य रूपं तन्नुसङ्कोचे आस्रलोपः कस्मादेवं प्रदप्तस्त्वमिति चेदाह ॥ १८ ॥

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणेद्मि नाशयामि तृहञ्‌ धिर्नादरेच चकाराद्धिंसायां इन्द्रस्य विक्रमं छिनद्मि अ पनयामि छिदधिकिहिंसे मणोनलोपइति इदित्वात् हातनुषो लोपः सर्व्वेषां मर्य्यादाव्यवस्थाभनज्मि निवर्त्तयामि भन्जोधो मोटने व्योमआकाशस्य विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुधसंकुचि तनक्मीति पाठे तन्जुधसङ्कोचे सृनञ्चृताविच्य स्याभावे कः व्योमविशेषणे विस्तृतमिति निरर्थकं स्यात्॥ १८॥

न तृणेद्मीति लोकोऽयं मां विन्ते निष्पराक्रमं। एवं वदन् दाशरथिरपूणग्धनुषा शरं॥ १९ ॥

नहणेञ्चीत्यादि। न हणेऽस्मि न मारयामि इति कृत्वा हन्हिंहि सिंहिंसायां अस् हणहरम् अयं लोकोमां निष्पराक्रमं निर्वीर्य्यं विन्ते विचारयति विद्विचारणइत्यस्मादात्मनेपदिनः अस् अलोपः एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरं। अपृ णक् पृणक्ति स्म पृचीसंपर्के लङि अस् हल्ङ्यादिलोपः कुलं इति अस् विकरणनिदर्शनं॥ ३८॥

नहणेञ्चीत्यादि। कथमेवं प्रवृत्तिरित्याह अहं न हणेह्मि न हन्मि इति कृत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पल्यपहारो वृत्तइति भावः घीविदङ् मीमांसे नणोन्तेऽस्णी हृहधर्हिंसे हहहणपिद्धसे इति नणदृण् चकारात् णत्वं दाशरथीरामएवं वदन् धनुषा शरं अपृणक् युनक्ति स्म पृच्धीचसम्पर्के हसङ्ग्यादिसेरिति दिलोपः चङिति कङ् चतोणत्वं शृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति चिचपुङ्खः शरः सरइति चिकाण्डशेषः। इति नशब्दाधिकारः॥ ३८॥

## अथ प्रकीर्णकाः।

न्यवर्त्तयत्सुमित्राभूस्तं चिकीर्षु जगत्त्रयं। ऐन्द्रे तामाश्रमाद्राद्रिरिकत्वं पतत्रिणं॥ ४०॥

इतः प्रकीर्णकश्लोकानाह। न्यवर्त्तयदित्यादि। तं रामं जगत्त्रयं चिकीर्षु कर्त्तुमिच्छं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवर्त्तितवान् भ्रातः अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः

यदुच्च युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्रायां भूर्यस्य ऐचेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आश्रमादारात् समीपे दूरान्तिकार्थैरिति पञ्चमी ॥ ४० ॥

अथ प्रकीर्णकाः। न्यवर्त्तयदित्यादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं तं रामं सुमित्राभूर्लक्ष्मणो न्यवर्त्तयत् निवारयामास अन्यापरायेनान्यदण्डानौचित्यात् सुमित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति वा सुमित्राया भवतीति वा क्विवन्तमिदं रूपं अथ रामलक्ष्मणौ आश्रमादारात् समीपे गिरिकल्पं पर्व्वततुल्यं पतत्रिणं पक्षिणं ऐचेतां दृष्टवन्तौ अन्यारभ्यार्थारादिति पञ्चमी ॥ ४० ॥

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत। मा वधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥

तमित्यादि। तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यभ्यधावत धावुगतिशुद्ध्योरित्यस्मात् लङि स्वरितेत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्ठाइति हे राम मां जटायुं मा वधिष्ठाः मा वधीः वधबन्धने इत्यस्मादनेकार्थत्वादात्मनेपदिनः सेटोलुङि रूपं न हन्तेःमत्याङि आङो यमहन इत्यात्मनेपदं नास्ति अकर्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतोमां मा वधिष्ठाः ॥ ४१ ॥

तमित्यादि। तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति

मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावुञ्जवे
स्वजि उपास्थितैवमुक्तेतमिति वक्ष्यमाणश्लोकेनान्वयात् मा वधिष्ठा
इत्यादिपद्यार्द्धं हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति गम्यते हे
राम जटायुं मां त्वं मा वधिष्टान मारय हन्तेस्याशिषि: हन
वधष्टौव्यलीति वधादेश: धात्वरन्तत्वात् वधोरस्येतीम् आत्मने
पदमिच्छन्ति परस्मैपदिनां कचिदिति परवाक्यात् स्वमते वाऊ
स्यात् आत्मनेपदं किम्वा आङ्पूर्व्वहन्ते: आत्माङ्गढादढाचाहन
यमइति मं आत्माङ्गढादित्यस्य कचिद्व्यभिचारात् तथाच गाण्डी
वी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षइति
किम्वा जटायुमिति नामकीर्त्तनेन तव पितु: सखा अहमिति ज्ञा
पितं तेन च तव पितु: सख्यदार्ढ्येनाहं तव स्वाङ्गमिव मम हिंसया
तव स्वाङ्गहिंसा व्यर्थेति आरोपितात्माङ्गत्वादात्माङ्गढादित्या
त्मनेपदं किम्वा आत्माङ्गढादित्यत्र आत्मशब्देनात्मीयोऽपि
लक्ष्यते किम्वा धातूनामनेकार्थत्वाद्वधङ्निन्दे च इत्यस्य रूपं
कित्तिजगुपइत्यादौ निन्दावधे:सन्विधानादत्र न सन् जटा
आयुर्यस्येति व्युत्पत्या तस्य च प्रवयसोजटायुष: स्वर्गिण: किमनु
शोच्यतेऽधुनेति दर्शनाच्च जटायुमिति चिन्त्यमिति भ्रान्तावद
न्ति यतो वाऊस्यादिणधातोरुण्प्रत्यये आयुशब्दोऽयमुदन्तोऽपि
दृश्यते यथा वायुना जगदायुनेति जटायुश्च जटायुरिति शब्द
भेद: पौलस्त्यस्य जटायुषा विघटित: कार्ष्णायसोऽयं रथ: पश्यैते
पुरत: पिशाचवदना: कङ्कालशेषा: कृता:। खड्गछिन्नजटायुपक्ष
तिरित: सीताञ्चलन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुदइव द्यामभ्युद
स्थादरिरित्येतत्पद्यमुनादिवृत्तावुद्धृतदत्तेन जटायुशब्दस्य स

क्तोऽदन्तत्वेन दैन्यप्रापणायोदाहृतं अहं सीतामैक्षिषि दृष्ट वान् त्वां च दृष्टम् अतोऽपि मा वधिष्ठाइति भावः ॥ ४१ ॥

उपास्थितैवमुक्ते तं सखायं राघवः पितुः। पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्त्रिणं। ततो रावणमाख्याय द्विषन्तं पततां वरः ॥ ४२ ॥

उपास्थितइत्यादि। पक्षिणैवमुक्ते सति राघवस्तं रणभङ्गानुष्ठानेन उपास्थित परिचितवान् संगतकरणआत्मनेपदं स्थाघ्वोरिच्चेतीत्वं ह्रस्वादंगादिति सिचोलोपः पितुः सखायं मम पितुः सखायमिति कृत्वा सखिशब्दाद्द्वितीयैकवचने रूपं सख्युरसम्बुद्धाविति णित्वाद्वृद्धिरायादेशः पप्रच्छ पृष्टवान् तं पक्षिणं जटायुं किं जानकीवार्त्तां संग्रामञ्च ततउपस्थानानन्तरं रावणं द्विषन्तं शत्रुं आख्याय कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरोजटायुर्ममारेति परेणान्वयः ॥ ४२ ॥

उपेत्यादि। पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायं उपास्थित आराधितवान् मैत्राध्वसङ्गइति मं स्थादेर्ङित्वमिदिति ङिर्गुणाभावश्च ह्रस्वादिति सिलोपः ततउपस्थानानन्तरं द्विषन्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षिणां वरः श्रेष्ठोजटायुर्ममारेति वक्ष्यमाणश्लोकेन सम्बन्धः ॥ ४२ ॥

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे। तस्यान्त्यक्रियां कृत्वा प्रतस्थाते पुनर्व्वनं ॥ ४३ ॥

व्रणेत्यादि। व्रणकृता वेदना पीडा मध्यपदलोपी समासः तया

स्नायन् स्नानिं गच्छन् श्रतर्थ्यीत्यादेशः ममार स्ततः क गिरिकन्द रे यं गिरिमभ्यरूपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमा त्रं तस्य जटायोरन्त्यमुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्य इत्यात्मनेपदं ॥ ४२ ॥

अर्णेत्यादि । अर्णेन या वेदना तया स्नायन् स्नानिं गच्छन् ममार अथ गिरिकन्दरे यं गिरिमभ्यरूपद्रामस्तस्य निम्न प्रदेशे गुहायां वा अग्निक्रियां दाहं अम्बुक्रियां तर्पणं च कृत्वा पुनर्व्वनं प्रतस्थाते अर्थाद्रामलक्ष्मणौ प्रतिज्ञानिर्णयेत्यादिना प्रस्थोमं स्फुरच्छोक्तिमिति नियमात् ठीपं । अथालम्ब्यधनूराम इत्यादिपद्यार्द्धादनन्तरं सीताविरहदुःखार्त्तः कोपसंरक्तलो चनइति यमं युनज्मि कालेनेत्यादिपद्यार्द्धानन्तरं विनज्मि धाम सर्व्वेषां हणज्मि सकलं जगदिति एवं वदन् दाशरथिरित्यादि पद्यार्द्धादनन्तरं जगत्त्राणाय सन्नद्धुस्तृणवत् स्वेन तेजसेति न्यवर्त्त यत् सुमित्राभूरित्यादिपद्यार्द्धानन्तरं तेजःसाम्यं विदन्नात्मं दिध क्षन्तमिवानलमिति तं सीतापालिनं मत्वेत्यादिपद्यार्द्धानन्तरं प्रोवाच सतदापत्री भयाद्रामेण तर्जितइति उपास्थितैवमुक्त नमित्यादि पद्यार्द्धानन्तरं पप्रच्छ जानकीवार्त्तां संग्रामश्च पतत्रि णस्तिति तस्यान्त्यमुक्रियां कृत्वेत्यादि पद्यार्द्धानन्तरं विराधमीयि वांसौ तां विचिन्वानावितस्ततइति पद्यार्द्धं केनचित् क्वचित् पुस्त के प्रक्षिप्तं सर्व्वमिदं प्राचीनैरुपेक्षितत्वादमूलमेव तत्राप्यथालम्ब्य धनूरामइत्यादिपद्यार्द्धानन्तरं सीताविरहदुःखार्त्तः कोपसंरक्त लोचनइति पद्यार्द्धमतीवायुक्तं मशब्दाधिकारे नशब्दाभावात् ॥ ४२ ॥

सत्वानजस्रं घोरेण बलापकर्षमश्नता। क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते गृहीतौ कर्म्मणि लिट् किं नाम्ना दीर्घबाहुना अन्वर्था चेयं संज्ञा एक एकेन बाहुना द्वितीयोद्वितीयेन क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन सत्वान् अजस्रं सदा नञ्पूर्व्वाज्जसेर्नमि कम्पीति रः अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्येव पाकादिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल्॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घबाहुनाम्ना रक्षसा जगृहाते गृहीतौ कर्म्मणि टो क्षुध्यता बुभुक्षुणा दिवादित्वात् श्यन् बलापकर्षं सत्वान् प्राणिनोऽजस्रं निरन्तरं अश्नता भक्षयता बलादपकृष्य त्वरया परिष्काराादिकमकृत्वैव परीप्सायाण्ड्यात्वरायां णमिति परः क्षमते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षणक्रियाविशेषणं एतेन त्वरयापरिष्कारादिकं तदपि प्राप्तं परिष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् चणम्बेत्यस्य योगविभागाद्वा चणम् घोरेण भयदेन नञ्पूर्व्वाज्जसेर्हिंसदीपकम्पाजसेति रः ॥ ४४॥

भुजौ चक्रततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ। सच्छिन्नबाहुरपतद्विक्लवो कम्पयन् भुवं॥ ४५॥

इति प्रकीर्णकाः।

भुजावित्यादि। रघूत्तमौ रामलक्ष्मणौ तस्य योजनबाहोः बाहू यथास्थानमागतौ चक्रतुः छिन्नवन्तौ कृतौ छेदने इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशतोऽङ्गुलिभ्य इति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डच्विधिः निरादय इति समासः टिलोपः स छिन्नबाहुः कृत्तभुजः सन् अपतत् पतितः पतेर्लुङि रूपं लृदित्वादङ् विक्लवो व्याकुलः भुवं भूमिं कलयन् कल चलने घटादित्वे ह्रस्वत्वं। इति प्रकीर्णकाः ॥ ४५ ॥

भुजावित्यादि। रघूत्तमौ निस्त्रिंशाभ्यां तस्य रक्षसो भुजौ स्वस्वग्रहणोद्यतौ चकृततुः कृतीश पछिदि त्रिंशतोऽङ्गुलीभ्यो निर्गतः निस्त्रिंशः निसःशतो ड इति सूत्रे निस इति निर्देशात् निष्पन्नस्य इत्यादिवत् ज्ञापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलिभ्योऽधिकं परिमाणं खड्गस्योक्तं निस्त्रिंशः करखड्गयोरिति कोषः स च्छिन्नबाहुः सन् भुवं कलयन् कम्पयन् न्यपतत् कल ह्मल चालने ज्वलह्वलेत्यादिना अगेर्व्वा ह्रस्वः विक्लवो व्याकुलः। इति प्रकीर्णकाः ॥ ४५ ॥

## अथ कृत्याधिकारः।

**प्रष्टव्यं पृच्छतस्तस्य कथनीयमवीवचत्। आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः ॥ ४६ ॥**

इतः परं कृत्याधिकारः। प्रष्टव्यमित्यादि। स योजनबाहुः निहतो रामं पप्रच्छ को भवान् कस्य पुत्रः कथं तव वनवासः कस्माद्वो

द्विषः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृष्टतस्तस्य तथ्यमाख्यानीयर इति तथ्यत् प्रश्नेति यत्नं टवस्य रघूत्तमः इदानीं कथनीयं कथनार्हं तत्प्रश्नानुरूपं पूर्व्वेणानीयर अवीवचदकिस्स वचभाषणे चौरादिकः स्वार्थिकोणिच् लुङ् चङ् णिलोपह्रस्वः द्विर्व्वचनसन्वद्भावेत्वदीर्घत्वेषु रूपं किन्तदित्याह आत्मानं रामोदाशरथिरिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगकलेन रावणः सीतामपहृतवान्॥ ४६॥

अथ कृत्याधिकारः। स्रमते त्यास्त्यानीयष्यण्क्यप्केलिमाः। प्रष्टव्यमित्यादि। कस्त्वं कथमिहागतइत्यादि प्रश्नार्हं पृष्टतस्तस्य राक्षसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपं अवीवचत् कथितवान् वच्कच्सन्देशे किलाद्युरादिः ञिश्रीत्यङ् ञ्यञ्जुङःखः खेःसन्वत् ञेर्लोपः किन्तदित्याह आत्मानं पित्रादिसम्बन्धेन वनतासं वनवासकारणमर्थात् जेयं जेतव्यमरिं शत्रुं रावणं शत्रुताबीजसहितमित्यर्थात् प्रक्षेशक्षीणे तय्ये शक्ताजिति यङ् शतरि तु यहस्वपाद्योरिति जिः कयत्कवाक्यप्रबन्धे स्वास्योपोऽश्नित्ययोरित्यकारलोपेऽपि स्थानिवद्भावात्नञ्जित्यन्तोगुङ्तोरिति त्रिः ञेर्लोपः ते त्याः शक्यार्हेति अर्हे इत्यर्थे सर्व्वत्र त्यः॥ ४६॥

लभ्या कथन्नु वैदेही शक्योद्रष्टुं कथं रिपुः। सह्यः कथं वियोगश्च गद्यमेतत्त्वया मम॥ ४७॥

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वदेही प्राप्या पोरदुपधादिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्या

दिना तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सो ढव्यः सकिसहोऽस्मेति यत् मद्यमेतत् कथनीयमेतत् गदमदेत्या दिना यत् ममेति शेषविवक्षायां षष्ठी त्वं पुनः कः इति पृष्टश्चाह ॥ ४७ ॥

लभ्येत्यादि। इत्यपि अवीवचदिति सम्बन्धः नु प्रश्ने कथं वैदेही लभ्या रिपुरावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः सीतायाइत्यर्थात् सह्यः एतत्सर्व्वं त्वया मम सम्बन्धे गद्यं वाच्यं लभद्राकशशाप्तौ शकथन्द्रशकित्वन्नशक्तौ सहक्षमर्षे एभ्यः पूशक सहेत्यादिना यः गदभावे इत्यस्मात् गदमदयमेति यः त्वयेति त्यभावकेति कर्त्तुः षष्ठी निवृत्तिपक्षे तृतीया ॥ ४७ ॥

अहं रामश्रियः पुत्रोमद्यपीतइव भ्रमन्। पापचर्य्योमुनेः शापाज्जातइत्यवदत्स तं ॥ ४८ ॥

अहमित्यादि। हे राम अहं श्रियः पुत्रः मद्यपीतइव वाहिताग्न्यादिलाक्षिष्ठान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात्पापचर्य्योराक्षसः मुनेः स्थूलशिरसः शापाज्जातउत्पन्नः माद्यत्यनेनेति मद्यं चरितव्यं चर्य्यमेतौ पूर्व्ववद्यत्प्रत्ययान्तौ पापं चर्य्यं यस्येत्यवदत् सयोजनवाऊस्तं रामं वाक्यार्थोऽत्र कर्म्म ॥ ४८ ॥

अहमित्यादि। इति सयोजनवाऊस्तं रामं अवदत् किन्तदित्याह हे राम अहं श्रियोऽप्सरसः पुत्रः मद्यपीतः पीतमदिरइव भ्रमन् कार्य्याकार्य्यविवेकशून्यत्वात् कृतापराधोमुनेः स्थूलशिरसः शापात् पापचर्य्यः पापहेतुकर्म्मा राक्षसोजातः एतत्

कथनं तदाक्ये रामप्रीत्यर्थं मद्दीभिर्थञ्जिर्थे मद्यतेऽनेनेति मद्यं अभिधानात् गदमदयमेत्यादिना ढभावे विहितोऽपि यः करणे पीतं मद्यं येनेति अग्न्याहितादित्वात् क्तान्तस्य वा परनिपात इति रः खमते गमकत्वात् पापं चर्य्यं चरणीयं यस्य गदमद यमचरेति यः ॥ ४८ ॥

प्रयातस्तव यस्यत्वं यज्ञपूतोऽब्रवीमि ते। रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं यष्टव्यत्वं प्रयातः यमेः पूर्व्ववत् यत् यज्ञपूतस्तव यज्ञेण पावितः सन् देवोभूतोऽब्रवीमिते तुभ्यं कथयामि युष्मदस्तुर्थ्येकवचनस्य तेमयावेकवचनइतिते आदेशः क्रियायोगे चतुर्थी कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं यष्टव्यत्वं प्रयातः प्राप्तः सन् तव यज्ञेण पूतः पापाद्विमुक्तः पूर्व्वदर्शं लब्ध्वा ते तुभ्यमहं ब्रवी मीति तादर्थ्ये चो यमेः पूर्व्वे च यः पूक्लिशइदितइत्यनेन वेमृत्वात् नेमृडोऽश्वीदिदेम इति पूकः क्तकवत्वोरनिमत्वं वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्यइति अक्वोद्दृष्टुं रिपुः कथमित्यचोऽत्र मुक्तं ॥ ४९ ॥

ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः। सुग्री वोनाम वर्य्योऽसौ भवता चारुविक्रमः॥ ५०॥

वैदेही प्राप्या कथमिति यमुपेत्य पृष्टवान् तं कथयन्नाह ऋष्य मूकइत्यादि। ऋष्यमूकपर्व्वते सुग्रीवोनाम कपिः चारुविक्रमो महापराक्रमोऽस्ति असौ भवता वर्य्योवरणीयः प्रार्थनीयः वर ईप्सायामिति चौरादिकाद्यत् यद्वा अवद्यपण्येत्यच वृञो वर्य्ये ति स्त्रियामनिरोधे अनिरोधा सततप्रवर्त्तनी वर्य्या प्रीतिर्य स्येत्यर्शआद्यच् भवता सहवर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृवधः सः पण्योविक्रेतव्योभ्रातुर्वालिनोवधोयेन यद्येवं तदा कथं मया पापीयान् वर्य्यइत्यतआह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनोभ्रातुर्बधेन निर्द्दोषत्वादिति भावः॥ ५०॥

ऋष्येत्यादि। लभ्या कथं नु वैदेहीत्यत्रोत्तरमिदं सुग्रीवो नाम कपिर्ऋष्यमूकनामपर्व्वते अस्ति असौ सुग्रीवोभवता वर्य्यः वरणीयः यतश्चारुविक्रमः अनुपकारकेण मया वृतोऽसौ मत्का र्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृवधः पण्योविक्रेतव्योभ्रा तुर्व्वालिनोवधोयेन भवतो वालिवधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात्पण्यव्यपदेशः तर्हि पापात्मन स्तस्य वरणमनुचितं नच तद्वचनेऽपि विश्वासइत्यतआह अन वद्यः अनिन्द्यः दारापहारित्वेनाततायिनोभ्रातुर्वधे निर्दोष त्वात् नञ्पूर्व्वोवदिः पण्यव्यवहृतौ स्तुतौ वृञ्गसम्भक्तौ एषां या क्तानां पण्यवद्यवर्य्येत्यादिना निपातनात् तथा रूपं केचित्तु वरस्के पेइत्यस्मात्तव्यानीययादति ये वर्य्यइति रूपमित्याहुः ऋषयो

ऽमूका अध्ययनशीलायत्र स ऋष्यमूकः मूर्द्धन्यषकारवानयं ऋष्यो मृगविशेषो मूकोयत्रेति वा बलहृश्याहृश्याखलीति यमकात् तालव्यशकारवानिति केचित् केचित्तु ऋष्योऽद्रिभेदे भमूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यतइति न्यायात् ऋष्यमूकइत्येव संज्ञामाङः नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमेष्वव्ययं अन्यथा भेदके तृतीया स्यात् ॥ ५० ॥

तेन वध्येन हन्तासि त्वमर्य्यं पुरुषाशिनां। राक्षसं क्रूरकर्म्माणं शक्रारिं दूरवासिनं ॥ ५१ ॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वध्येन वहत्यभिप्रेतमनेनेति वध्यं करणमिति यत् कीदृशमर्य्यं स्वामिनं पुरुषाशिनां राक्षसानां अर्य्यःस्वामिवैश्ययोरिति यन्निपात्यते क्रूरकर्म्माणं पापाचारं शक्रारिं रावणं यद्येवमहमेव हन्तुं समर्थइत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यतइति भावः॥ ५१ ॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि स्वांरूपं वध्येन उह्यतेऽर्थोऽनेनेति वध्यस्तेन कीदृशं पुरुषाशिनां राक्षसानां अर्य्यं स्वामिनं क्रूरकर्म्माणं पापाचारं शक्रस्यापि अरिं एतेन दुर्ज्जयत्वं दर्शितं दूरे वसन्तं एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यतइति भावः वहेर्ण्यौ प्रापणे ऋहलिगत्यां अमयोः पूर्व्वेण निपातः ॥ ५१ ॥

आस्ते स्मरन् सकान्ताया हृतायावालिना कपिः।
सुषेयोपसर्य्याया गोष्ठे गोदण्डताडितः॥ ५२॥

यद्यनवद्यसदा कथमस्य पणोभ्रातृवधइत्याह आस्तेइत्यादि। वालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते अधीगिति कर्म्मणि षष्ठी कस्येव वृषो यथा उपसर्य्यायाआसन्नप्रसवायागोः स्मरन् गोष्ठे आस्ते उपसर्य्याकाल्याप्रजनइति निपातितं दण्डताडितः सन् दण्डस्थानीयोऽत्र वाली॥५२॥

आस्तइत्यादि। तुल्ययोः सख्यनैविश्वस्तसूचनाय पण्यभ्रातृवधत्वादोषदर्शनाय वा इदमाह सकपिः सुग्रीवोवालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतोमया सा लभ्येति कर्म्मणि षष्ठी यथा उपसर्य्यायाआसन्नगर्भग्रहणायागोः स्मरन् वृषोगोष्ठे गोस्थाने दण्डेन ताडितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र वाली उपस्त्रियते वृषभेन गम्यते उपसर्य्या ऋतुमत्यां पण्यावद्येत्यादिना निपात्यते॥ ५२॥

तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतं। लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि॥ ५३॥

तेनेत्यादि। हे राम तेन वानरेण संगतं सख्यं अजर्य्यं अनपायं नजीर्य्यतइत्यस्मिन् वाक्ये अजर्य्यं संगतमिति निपातितं आर्य्येण विशिष्टत्वेनोपात्तं संगतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तआनेन

युष्मद्विधेन संगतं न भवति आर्य्येण सदाचारेण ऋच्छतीत्यर्त् ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यसि ॥ ५३ ॥

तेनेत्यादि। हे राम तेन सुग्रीवेण सह द्रुतं शीघ्रं अजर्य्यं मैत्रीं कुरु कीदृशं सङ्गतं समवक्रमेण उचितं सङ्गतपदस्य सख्य वाचित्वेऽजर्य्यस्य तथार्थत्वाद्वैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु कीदृशं अजर्य्यं अनपायं सङ्गतार्थस्यापि अजर्य्य शब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्व्ववन्निपातितं स्नेहोमैत्रीप्रीतिरजर्य्यमभाजनसङ्गतं प्रोक्तमिति हलायुधः आर्य्येण सदाचारेण ऋधातोर्ह्रस्वासेरिति ण्यणि रूपं आरात् पापेभ्योदूरे यातीति आर्य्यइति केचित् तदा मनी षादिः द्रुतशब्देन यावद्भवद्विधेनान्येन सह तस्य सख्यं न जात मिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि म्यस्यर्द्धेन इतीम् ॥ ५३ ॥

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहं। मित्र भूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

ननु यावत्कार्य्यं न सिध्यति तावन्मां सङ्गच्छति हतहत्यस्तु मैत्र्य तत्राह अनृतोद्यमित्यादि। सत्यमुचतइति कर्म्मणि यत् अहं सत्यं वचो ब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यं भावे क्यप् यजादित्वात्संप्रसारणं उभयत्रापि

वद: सुपि क्यप् चेति चकाराद्यच यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गत: भुवोभावे क्यप् रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारश्चान्तादेश: ॥ ५४ ॥

अनृतोद्यमित्यादि। स्वकार्य्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तत्र सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदेर्वाचि लेर्व्वद: क्यपयाविति क्यप् यद्व सुपाद्योरिति जि: तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गत: सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहन:क्यप्भावेनतश्चेति क्यप् नस्य तस्य लिङ्गभेदोऽभिधानात् ॥ ५४ ॥

आदृत्यस्तेन वृत्येन स्तुत्योजुष्येण सङ्गत:। इत्य: शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥

आदृत्यइत्यादि। तेन संगत: सन् गृध्यमभिलषणीयमवाप्स्यसि ऋदुपधादिति क्यप् कीदृश: कीदृशेनेत्याह आदृत्य: आदरणीय: वृत्येन वरणीयेन स्तुत्य: स्तवार्ह: जुष्येण सेव्येन हनुमत् प्रभृतीनां कइव शिष्येण गुरुरिव यथोपाध्याय: शिष्येणैकार्य: अनुगम्यस्तद्वदिति एतिस्तुशास्वित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥

आदृत्येत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गत: सन् गृध्यमाकाङ्क्षणीयमर्थमवाप्स्यसि त्वं कीदृशस्तेन वा *कीदृशेन आदृत्यआदरणीय: वृत्येन वर

णीयेन स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण जनानामर्थात् तेन तुल्य योरुभयोः सङ्गतं योग्यं इत्यः अनुगन्तव्यः अर्थात्तेन भवतोगुरु त्वेन तस्य शिष्यत्वेन मैत्रीकरणेऽपि न ते मानहानिरिति सूचितं इङ्शादरे वृञहतोश्च्छुत्नस्तुतो शङ्ोश्निजुषमुदिषेवे दृणगतौ शासुच्छ्शासने ग्रधिर्युलिपे एभ्योइभृजुषेत्यादिना क्यप् खस्य तनपिति ॥ ५५ ॥

नाखेयः सागरोऽप्यन्यस्तस्य सङ्गृत्यशालिनः। मन्यु स्तस्य त्वया मार्ग्योमृज्यः शोकस्य तेन ते ॥ ५६ ॥

नाखेयइत्यादि। तस्य सुग्रीवस्य सङ्गृत्यशालिनः हनुमदादिभृ त्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्योद्वितीयः सागरोऽपि नाखेयोन खननीयः अपितु खननीयएव अपिशब्दः सम्भावनायां तस्य कारणं सङ्गृत्यशालित्वं ईचखनइति क्यवोकारी तस्य शरी रस्य मन्युस्त्वथा मार्ग्योऽपनेयः ते तव तेन च शोकोमृज्यः मृजे र्विभाषेति यदिकल्पे ण्यत् ॥ ५६ ॥

नाखेयइत्यादि। हनूमदादिसङ्गृत्यशालिनस्तस्य सुग्रीवस्य अन्योऽपि सागरोन अखेयः अपि तु शक्यखननएव एतेन सन्नीचं वक्ष्यसहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुऊविदारे खनाद्वेरेये इति टेरेत्वं तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्योमार्ज्जनीयः पश्चात्तव शोकस्तेन मृज्यः अपनेयः एतेन सद्यः कथं वियोगस्येत्यत्रोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगा

पनयात् अपिशब्दः सम्भावनायां मृजूष शुद्धौ ऋदुपधाच्चेति वा क्यप् पक्षे ऋहलोर्ण्यदिति ण्यत् चजोः कुघिण्ण्यतोरिति गत्वं मृजेरकृतीति वृद्धिः ॥ ५६ ॥

स राजसूययाजीव तेजसा सूर्य्यसन्निभः । अमृषोद्यं वदन् रुच्योऽजगाहे द्यां निशाचरः ॥ ५७ ॥

स इत्यादि। स निशाचरो द्यामाकाशं जगाहे गतः राजसूययाजीव राज्ञा सूयते राजा वा अनेन सूतइति राजसूयः क्रतुः तेनेष्टवान् स राजसूययाजी करणे यजइति णिनिः तद्वदित्यर्थः रुच्यः प्रियो जातो रामस्येत्यर्थात् राजसूयइत्यादिना क्यबन्ता राजसूयादयः ॥ ५७ ॥

सराजेत्यादि। इत्येवममृषोद्यं सत्यवचनं वदन् स निशाचरो जनवाञ्छी स्वर्गं आकाशं वा जगाहे गतः राजसूयनाम यज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुञ्स्नानसन्धानक्लेदपीडामन्थे राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्यधाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी यजादित्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतौ कृष्टविमोषेत्यादिना निपातितौ सूरएव सूर्य्यः स्वार्थेयइति गोयीचन्द्रः नञ्पूर्व्वमृषाशब्दाद्वदेर्नित्यं क्यप् मृषोद्यं नित्यमित्युक्तेः ॥ ५७ ॥

अक्लष्टपच्याः पश्यन्तौ ततोदाशरथी लताः। रत्ना
न्नपानकुप्यानामाटतुर्न्नष्टसंस्मृती ॥ ५८ ॥

अक्लष्टपच्यादित्यादि। ततोनिशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ कीदृशौ नष्टा संस्मृतिर्ययोः केषां संस्मृतिः रत्नान्नपानकुप्यानां रत्नान्नपानानि प्रसिद्धानि कुप्यं स्वर्ण रजताभ्यामन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्म्मणि षष्ठी लताः पश्यन्तौ कृष्टे पच्यन्तेइति कृष्टपच्याः पूर्व्ववत् क्यप् पश्चान्नञ्समासः स्वयमेव पच्यन्ते यास्ताइत्यर्थः ॥ ५८ ॥

अकृष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशरथी रामलक्ष्मणौ आटतुः अटगतौ लताः कीदृशीः अकृष्टपच्याः कृष्टे क्षेत्रे स्वयमेव पच्यन्तइति कृष्टपच्याः पूर्व्वेण निपातः पश्चान्नञ्समासः कीदृशौ रत्नानां अन्नस्य पानस्य कुप्यानां तासां दीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्धमनुभवतीति कर्म्मणि षष्ठी सम्बन्धविवचयेत्यन्ये कुप्यतइति कुप्यं स्वर्णरूप्याभ्यामन्यद्धनं पूर्व्ववन्निपातः ॥ ५८ ॥

समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान्।
सिध्यतारामिव ख्यातां शवरीमापतुर्व्वने ॥ ५९ ॥

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शवरीमापतुः प्राप्तवन्तौ अव्यथ्यौ न व्यथेते इति पूर्व्ववत् क्यप् परिश्रमवर्जितावित्यर्थः

नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् भिद्योद्ध्यौ नदवि शेषौ भिद्योद्ध्याविति पूर्व्ववत् निपातितं भिनत्ति कूलमिति भिद्यः उज्झत्युदकमिति उद्ध्यः उद्ग्रउत्सर्गे दकारात्परस्य धकारो निपात्यते तत्सदृशान् नदान् सिध्यतारामिव ख्यातां सिध्यन्त्यस्मि न्निति सिध्यः पुष्यसिध्यौ नक्षत्रे इति निपातनात् पुष्याख्यां तारा मिव ख्यातां शवरीं ॥ ५८ ॥

समुत्तरन्तावित्यादि । तौ वने शवरीमापतुः प्राप्तवन्तौ न व्यथेते अव्यथौ नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् कूलं भिनत्तीति भिद्यो नदः वार्य्युज्झतीति उद्ध्यो नदः तयोस्तु ल्यान् शवरीं कीदृशीं सिध्यतारामिव कार्य्यसाधकत्वात् ख्यातां प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्व्वत्र गृह्यविनीयेत्या दिना निपातः ॥ ५८ ॥

वसानां वल्कले शुद्धे विपूयैः कृतमेखलां । क्षामा मञ्जनपिण्डाभां दण्डिनीमजिनास्तरां ॥ ६० ॥

वसानामित्यादि । वसानां परिदधानां वल्कले विपूयैर्म्मुञ्जैः कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्व्वस्य पवतेर्विपूयइत्यादि ना मुञ्जे निपातितं तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपू यैरिति विशेषणं पवित्रैरित्यर्थः मुञ्जशब्दस्तदानीं सामान्यमाह विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमु च्यते वसानां वल्कले शुद्धे विपूयैरिति क्षामां कृशां क्षायोम इति निष्ठामत्वं अंजनपिण्डस्येवाभा यस्याअस्तीति तां कृष्णां

दण्डिनीं गृहीतदण्डां आस्तीर्य्यतइति आस्तरः छदोरप् अजिनमास्तरउत्तरासंगोयस्यास्तामजिनास्तरां॥ ६०॥

वसानामित्यादि। दृष्ट्वा तामनुचद्रामइति तृतीयश्लोकेनान्वयः शुद्धं वल्कलद्वयं वसानां वसलकस्तृतौ स्तृतिराच्छादनं विपूयैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पूङ्शोधे पूर्व्ववन्निपातः शुद्धे इत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः यद्यपि विपूयशब्दो मुञ्जे रूढस्तथाप्यन्वयवशात् पवित्रार्थः चामां व्रतेन चीणां चैशुष्यचामकवइति कस्य मः अञ्जनपिण्डवदाभा यस्यास्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीं अजिनमास्तरः शयनी यस्याः आस्तरउत्तरासङ्गइति केचित्॥ ६०॥

प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियां। अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दितां॥ ६१॥

प्रगृह्येत्यादि। अविक्रियामजातविकारां अतएव स्पष्टरूपां एवञ्च साध्वीं साधुचरितां कमिव प्रगृह्यपदवत् यस्य पदस्य प्रगृह्यसंज्ञा तत्पदं प्रगृह्यं प्रत्यपिभ्यांग्रहेरित्यनुवृत्तौ पदास्वैरित्यादिना प्रपूर्व्वाद्ग्रहेः पदेऽभिधेये क्यप् यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च स्तप्रगृह्याश्चेति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः कथमजातविक्रियेति चेदाह अगृह्यां गृहेः स्वैरविषये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वीतरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षापचविषये क्यप् एवं चानिन्दितामगर्हितां॥ ६१॥

प्रगृह्येत्यादि। नास्ति विक्रिया रागादिविकारोयस्यास्ताम विक्रियां स्पष्टं अकौटिल्यं व्यक्तं रूपं स्वभावोयस्यास्तां स्पष्टरूपां साध्वीं साधुचरितां अतएव प्रगृह्यपदतुल्यां यत्र नाजोऽन्तोऽना ङ्गिमुत्येत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनीयेत्यादिना पदादौ गृह्यं निपातितं पदादिविष यसूदाहरणेऽभिहितः तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितं अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूप स्यान्यथाभावात् साधु च भवति अर्थप्रतिपादकत्वं धर्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वं अविक्रियत्वे हेतुमाह अ गृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भवति गृह्या परतन्त्रा पश्चान्नञ्समासः देवगृह्यां देववर्ग्यां देव पक्षपातिनीं अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्व्वं स्त्रीत्वा विवक्षया त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युक्तइति पुम्वद्भावः ॥ ६१ ॥

धर्म्मकृत्यरतां नित्यमवृष्यफलभोजनां। दृष्ट्वा ताम मुचद्रामोयुग्यायातइव श्रमं ॥ ६२ ॥

धर्म्मकृत्यरतामित्यादि। पुण्यकर्म्मरतां नित्यं अवृष्यफलभोज नां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चा न्नञ्समासः विभाषाकृवृषोरिति क्यप् दृष्ट्वा तां तथाविधां श्रम ममुचत् मुक्तवाम् तद्दर्शनाह्लादितत्वात् युग्यायातइव वाहनं प्राप्त इव क्यप् युग्यञ्च पत्रइति निपातितं ॥ ६२ ॥

धर्मेत्यादि। नित्यमविरतं धर्मस्य कृत्ये करणे रतां वृष्यं वैद्यशास्त्रोक्तवीर्य्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं यस्याः भुज्यतेऽनेनेति वेति घञलनटोऽघेदति अनट् तेन भोजनं यस्यादति वा कृञडुदकृतौ वृषुसेचने आभ्यां कवृषमृजेत्यादिना वा क्यप् एवम्भूतां तां शवरीं दृष्ट्वा चित्तप्रसन्नतया रामः श्रमम मुचत् त्यक्तवान् मुञ्चशपञोमोचे स्वदित्वात् ङः युग्येन वाहने नाश्वादिना आगतइव शुद्धविनीयेत्यादिना युजः क्यपि युग्यं नि पातितं॥ ६२॥

सतामूचेऽथ कच्चित्त्वममावास्यासमन्वये। पितॄणां कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः॥ ६३॥

सइत्यादि। अथानन्तरं त्यक्तश्रमः सरामस्तां शवरीमूचे उक्तवान् कच्चित् किं त्वं अमावास्यायाः संप्राप्तौ पितॄणां कार्य्यं तच्च प्रीत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः कुरुषे अमा सह वसतोऽस्यां चन्द्रार्काविति अमापूर्व्वकवसधातोः क्यप्॥ ६३॥

सतामित्यादि। अथ श्रमत्यागानन्तरं सरामस्तां शवरीं ऊचे कथितवान् ब्रुञउक्तौ वचोऽरे कच्चिदिति कामप्रवेदने ऽव्ययं त्वं फलैरमावास्यायास्तिथेः समन्वये सम्प्राप्तौ पितॄणां सम्बन्धि कार्य्यं कुरुषे कीदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्कावित्यमावास्या यद्वा

अमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता । तस्यां सोमोवसत्यस्मा ममावास्या प्रकीर्त्तिता । पाय्यधाय्येत्यादिना ण्यत्ति निपातः ऋवृ षद्धजेत्यस्याप्रवृत्तिपक्षे ऋत्तोर्ह्रस्वयोरिति ण्यत् वाच्यं वचनीयं निन्द्यमेव रूढं भुजवचेति ण्यणि कत्वनिषेधः ॥ ६३ ॥

अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्यविः । आरा व्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि ॥ ६४ ॥

अवश्यपाव्यमित्यादि । देवभाक् देवान् भजतइति भजोण्विः तद्गुविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना झयोहोऽन्य तरस्यामिति हकारस्य पूर्व्वसवर्णः पूञ्पवनइति भौवादिकः की दृशमवश्यंपाव्यमवश्यम्भावेन पावयितव्यमित्यर्थः ओरावश्यके ण्यत् मयूरव्यंसकादित्वात्समासः लुम्पेदवश्यमःकृत्येतुंकाममनसो वनीति मकारलोपः सोममौषधिविशेषं आसाव्यमभिषवार्हं अध्व रे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुपुवपीति यत् ॥ ६४ ॥

अवेत्यादि । कच्चित्त्वं देवभाग्यविर्हव्यं पवसे अग्निसंस्कारादिना पवित्रीकरोषि देवाय दातुमित्यर्थात् देवान् भजतइति ढाङ्गज वद्दसहोविण अहोश्पादेति हस्य घत्वं हविः कीदृशं अवश्यपाव्यं अवश्यम्भावेन पवितुं पवित्रीकर्त्तुं योग्यं पूङ्शोधेण्यतोरावश्यक इति ण्यण् ञित्यन्तेजुङ्तोरिति वृिः ओदौतोऽव्यन्तहयक्ष्या इति अज्वद्भावात् जलायवायावइति आवादेशः क्रियाविशेष णस्य द्वितीयान्तत्वात् तत्पुरुषः समासः द्यादित्यन्तपूर्व्वदानांष

संज्ञा इति सामान्योक्तिः मयूरव्यंसकादित्वात् समास इति न्यासः सम् तुम्मनःकामेऽवश्यमित्यादिना मलोपः कच्चित् त्वं द्विजैः सार्द्धं सोमं लताविशेषं नमस्यसि नमःकरोषीति नमस्तपोवरिव इति क्यः सोमं किम्भूतं अध्वरे यागे आसाव्यं अभिषवनीयं सन्धा नार्हं इसूय्वासोरिति ण्यण् द्विजैरासाव्यमिति वान्वयः ॥ ६४ ॥

आचाम्यं सन्ध्ययोः कच्चित् सम्यक्त्वेन प्रहीयते।
कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिं ॥ ६५ ॥

आचाम्यमित्यादि। प्रभातेऽपराह्णे च सन्ध्ययोर्यदाचाम्य मुपस्पर्शनं पूर्व्ववत् ण्यत् कच्चित्सम्यक् यथावत्तव तच न प्रहीयते काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निं आना य्यम् मन्यसे तद्वत् आनाय्योनित्य इति नयतेराङ्पूर्व्वस्य ण्यत् अयादेशो निपात्यते ॥ ६५ ॥

आचाम्यमित्यादि। कच्चित्ते तव सायं प्रातःसन्ध्ययोः सम्यगा चाम्यं आचमनं स्वयमेव न प्रहीयते न भ्रश्यते कर्म्मकर्त्तरि प्रत्य यः पूश्रकषहेत्यादौ चमादिवर्ज्जनात् इसन्तत्वाद्गुण् जनवधः सेमइत्यादौ आचमवर्ज्जनान्न वृद्धिः कच्चित् त्वं काले आतिथ्यो चिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं सम्मन्यसे तद्वत् आङ्पूर्व्वस्य णीञोण्यणि पाय्यधाय्येत्यादिना निपातः ॥ ६५ ॥

न प्रणाय्योजनः कश्चिन्निकाय्यं तेऽधितिष्ठति। देव कार्य्यविघाताय धर्म्मद्रोही महोदये॥ ६६॥

नप्रणाय्यइत्यादि। महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये देवकार्य्यविघाताय देवानहं हनिष्यामीति भावव चनाच्चेति भविष्यति घञ् तुमर्थाच्चभाववचनादिति चतुर्थी प्रणाय्योऽसम्मतोजनः प्रणाय्योऽसम्मताविति निपातितं कश्चित् निकाय्यं गृहं ते तव नाधितिष्ठते नाधिवसति पाय्येत्यादिना निवासे चिनोते र्निपूर्व्वात् एरदायादेशौ आदेः कुत्वञ्च अधिशीङ्स्थासांकर्मेति कर्म्म धर्म्मद्रोही धर्म्मद्रोहशीलः॥ ६६॥

नेत्यादि। हे महोदये कश्चित् प्रणाय्योऽसम्मतोजनश्चौरादि स्ते तव निकाय्यं निवासं देवकार्य्यविघातार्थं नाधितिष्ठति धर्म्मद्रो ही धर्म्मद्रोहशीलः धर्म्माय द्रुह्यतीति ग्रहादित्वात्‌णिन् धर्म्मद्रोहोऽ स्यास्तीति वा प्रपूर्व्वणीञोघ्यणि प्रणाय्यः निपूर्व्वचिनोतेर्घ्यणि नि काय्यः द्वौ पूर्व्वेण निपात्येते कर्म्मक्रियेत्यादिना निकाय्यस्याधार त्वे कर्म्मत्वं महानुदयः स्वर्गापवर्गफललक्षणस्तत्त्वज्ञानमेव वा य स्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जेस्याधिपत्यापवर्गयोरि ति विश्वदर्शनात् ततोऽर्शआदित्वादइत्यन्ये विघातायेति हनो घञि खेर्हाघोह्निति चेति घः हनस्तङ्॥ ६६॥

कुण्डपाय्यवतां कश्चिदग्निचित्यावतां तथा। कथा भीरमसे नित्यमुपचाय्यवतां शुभे॥ ६७॥

इति कृत्याः।

कुण्डपाय्यवतामित्यादि। कुण्डेन पीयते ऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसंचाय्याविति निपातितं कथिच्छ्याभीरमसे ऋतोपद्रति दीर्घः तथाग्निचित्यावतां अाहिताग्निकानां कथाभी रमसे चित्याग्निचित्ये चेति निपात्यते अग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्योऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्व्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथाभीरमसे शुभे कस्मात्। इति कृत्याधिकारः ॥९७॥

कुण्डेत्यादि। हे शुभे कस्मात् कथित्थं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्निवृत्तं रमसे क्रीडसि कुण्डैः पीयतेऽत्र सोमइति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्ये त्यादिना निपातः अविधमे येषां इति सोमपानपात्रद्वारा अग्नेश्चयनं राशीभावइत्यग्निचित्या पूर्व्ववन्निपातः उपचीयतइत्युपचाय्यो ऽग्निः पूर्व्ववन्निपातः अग्निविशेषोपचयविशेषाद्। इति जयाः ॥९७॥

## अथ प्रकीर्णकाः।

वर्द्धते ते तपोभीरु ध्यश्रेष्ठाविघ्ननायकान्। अश्नीषीः कामसंमोहौ संप्राप्याविनयेन वा ॥९८॥

अतःपरं प्रकीर्णकाः। वर्द्धतइत्यादि हे भीरु कातरचित्ते तव तपोवर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान्

व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यां जेरित्यात्मनेपदं कामसम्मोहौ कच्चिदजैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा संप्राप्थाः संप्राप्तासि कर्म्मणि लुङ् झलो झलीति सिचो लोपः अत्रानुक्रमिति कच्चिदिति योज्यं॥ ६८॥

अथ प्रकीर्णकाः।

वर्द्धतइत्यादि कच्चिदित्यत्रानुषञ्जनीयं हे भीरु कच्चित्ते तव तपोवर्द्धते कच्चित् त्वं तपसो विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठा अभिभूतवत्यसि विपराभ्यां जेरिति सं कच्चित् त्वं काममनङ्गविकारं सम्मोहमविद्याञ्च अजैषीः अजवदेति त्रिः कच्चिद्विनयेनापि त्वं सम्प्राप्थाः सम्प्राप्तासि कर्म्मणि ङी सम्बोधनमहिम्नार्थावगमात् कच्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति॥ ६८॥

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुषः। यमान्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः॥ ६९॥

नायस्यसीत्यादि। तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्म्मणो रोमन्थेति क्यङ् तपसः परस्मैपदञ्च गुरून् आचार्य्यादीन् सम्यक् यथावदनुवृत्त्याऽतूतुषः तोषितवत्यसि तुषेर्ण्यन्तस्य लुङि रूपं चङि णिलोपादि यमान्मृत्योर्नोदविजिष्ठाः नाभैषीः पुण्यकृतां नास्ति मृत्युभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिचइट् विजइति सिचो ङित्वेन गुणः निजायात्मीयाय अतुषः तुष्टवत्यसि॥ ६९॥

नायेत्यादि। अत्रापि कश्चिदनुषज्यते तपस्विनी तपःकुर्व्वती त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् समस्तपोवदि वदति क्यः दृष्टस्तुयतने कच्चित्त्वं गुरूनाचार्य्यादीन् सम्यगह्लादुपः तोषितवत्यसि तुषिलस्यौग्भितुष्टौ स्यन्मादङ् स्यक्तुकःखःखेः समृद्धिति खेदः कश्चित्त्वं यमात् उद्विजिष्टाः माभैषीः पुण्यवतां मृत्योर्भयं नास्तीति भावः यमदर्शियनिग्रहे वा कियत्कालं यमः कार्य्यइति भयं दूरीभूतमित्यर्थः विजङ्गोग्राभीकम्पि विजेर्नुर्नेमी त्यगुणत्वं कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि श्रद्धावती अभिद्धिलग्नत्वाशून्या वासीत्यर्थः पुषादित्वात् ङः ॥ ६८ ॥

अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ। अर्च्चयित्वा फलैरर्च्चौ सर्व्वत्राख्यदनामयं ॥ ७० ॥

इति प्रकीर्णकाः।

अथेत्यादि। अथानंतरमसौ शवरी अर्च्चमर्घार्थं पादार्थाभ्या चेति यत् मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः तदाद्यं आदौ भवमाद्यं तदुपनीयादरात् फलैरर्च्चयित्वा अर्चौ अर्च्चनार्हौ यत् रामलक्ष्मणौ सर्व्वत्रोक्तेषु अनामयं कल्याणं आख्यत्कथितवती अस्तीत्यङ्। इति प्रकीर्णकाः॥ ७० ॥

अथेत्यादि। एवं प्रश्नानन्तरं असौ शवरी मधुपर्कैणाद्यं सहितं अर्घ्यमुपनीय अर्च्यौ अर्चार्हौ रामलक्ष्मणौ फलैरादरात् अर्च्चयित्वा सर्व्वत्र पूर्व्वपृष्टेष्वर्थेषु अनामयं कुशलं आख्यत उक्त

वती वचनसङ्ख्येति कः सूक्ते पूजाविधावर्थः अर्घमस्मात्तदर्थे विका रस्येति यः मधुपर्काय्यमिति पाठे आदौ भवत्राद्यः मधुपर्कश्च आदीयतेऽर्थविशेषणं यदा आदिरेवाद्यः अर्घमधुपर्कादि पूजोपकारस्तमुपनीयेत्यर्थः आमयमश्नीतलवणं वा अनिष्टभावे प्रयुज्यते। इति प्रकीर्णकाः॥ ७०॥

## अतःपरं कृदधिकारः।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः। द्रुतं द्रष्टासि मैथिल्याः सैवमुक्त्वा तिरोऽभवत्॥ ७१॥

अथ कृदधिकारमाह। कृत्यानां तदन्तर्भावेऽपि भावकर्मणोः कृत्यादिति विशेषप्रतिपादनार्थः पृथगधिकारः तत्रोपपदं सप्तम्यस्थमित्यादिना एतदप्यधिक्रियते तान् इतोदर्शयन्नाह सख्यस्येत्यादि सा शबरी तिरोऽभवदन्तर्भूता एवमुक्त्वा किं तदित्याह तव सख्यस्य कर्त्तव्यस्य सख्युर्भावः कर्मणि षष्ठी कारकः सुग्रीवः ण्वुल्तृचाविति ण्वुल् त्वया सह मैत्रीं करिष्यति कपिनन्दनः कपीनां नन्दयिता नन्द्यादिभ्यो ल्युः कृद्योगे षष्ठी अनेनेति वर्त्तमाने लट् ॥ ७१॥

अथ कृदधिकारः। यद्यपि कृत्यानां कृत्स्वमस्ति तथापि भावकर्मणोर्विधानमिति सूचनाय पृथक् प्रदर्श्य कर्त्तरि शेषानाह तत्र निरुपपदोपपदयोर्निरुपपदं प्रयोगबाहुल्यादादौ दर्शयति सख्यस्येत्यादि। सा शबरी एवमुक्त्वा तिरोऽभवत् अन्त

र्दिता किमादित्याह सुग्रीवस्य सख्यस्य कारकः सख्यं करिष्यति सख्युर्भावः कर्म्म वा सख्यं विकारसंघेति यः ढचेकतीत्यादिना कर्म्मणि षष्ठी कपीनां नन्दयिता कपेः पुत्रोवा ग्रहनन्दिपचादेरिति अनः ततोद्भुतं मैथिल्याद्द्रष्टाऽसि प्रेचकोभविष्यसि अस्तेर्भविष्यत्सामीप्ये की अभिधानात् असीति युष्मदर्थे अव्ययमिति वा हष्टकोषे इत्यादिषु कालस्यानिर्द्देशात् त्रिष्वपि कालेषु हणादयोभवन्तीति बोध्यं हशेर्वृद्धोऽकिदिति रः॥ ७१॥

नन्दनानि मुनीन्द्राणां रमणानि वनौकसां। वनानि भेजतुर्व्वीरौ ततः पाम्पानि राघवौ॥ ७२॥

नन्दनानीत्यादि। ततस्तस्मादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ हफलेत्यादिना पाम्पानीति पम्पाया अदूरं अदूरभवस्येत्यण् मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणां उत्तमसमवाये अत्वादीणादिकोऽसुम् पृषोदरादित्वाद्वर्णविपर्य्ययः तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्म्मणि षष्ठी॥ ७२॥

नन्दनानीत्यादि। ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तौ जग्मतुरित्यर्थः भजन्तोभागसेवयोः तृफलभजत्रपेति अतएत्वं खिलोपश्च पम्पानामसरःसम्बन्धीनि पम्पाया अदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ण्णः मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि क्रीडाजनकानि उभयत्र ग्रहनन्दिपचादेरिति अनः कर्म्मणि षष्ठी॥ ७२॥

भृङ्गालीकोकिलक्रुङ्भिर्व्वाशनैः पश्य लक्ष्मण। रोच नैर्भूषितां पम्पामस्माकं हृदयाविधं॥ ७३॥

भृङ्गालीत्यादि। हे लक्ष्मण पम्पां पश्य अस्माकं हृदयाविधं हृदयं विध्यतीति यहिज्यादिना संप्रसारणं नहिवृतीति दीर्घः भूषितां कैर्भृङ्गालीभिः भ्रमरपंक्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भी रोचनैः शोभनैः क्रुङिति ऋत्विगादिना क्विन् निपातनसामर्थ्याद नुनासिकलोपाभावः संयोगाच लोपः क्विन्प्रत्ययस्येति कुत्वं॥ ७३॥

भृङ्गेत्यादि। रामइत्युवाचेत्यर्थाद्गम्यते हे लक्ष्मण पम्पां पश्य कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौञ्चैश्च भूषितां क्रुन्ठगत्यां चासुदित्यादिना विच् चकारेत्त्वं क्विप् संशयनिवारणार्थं नतु अव्ययार्थमिति बोध्यं विवितिपाठइत्येके ऋत्विगादौ क्रुञ्चः पृथक्पाठात् प्राक्कङ् नोर्नुः अपेञमृनोरिति ङस्यान्तस्य लुप् कीदृशैः वाशनैः कूजद्भिः वाशृङशब्दे रोचनैः शोभमानैः उभयत्र नन्द्यादित्वादनः पुनः किम्भूतां अस्माकं हृदयाविधं चेतः पीडयन्तीं हृदयं विध्यतीति क्विप् यहस्वपादोरिति जिः वीरुहोधङ्कावितिदीर्घनिर्द्देशात् कचित् क्विवन्ते पूर्व्वपदस्य दीर्घत्वमिति दीर्घः आङपूर्व्वस्य रूपं वा॥ ७३॥

परिभावीनि ताराणां पश्य मन्थीनि चेतसां। उद्भासीनि जलेजानि दुन्वन्त्यदयितं जनं॥ ७४॥

परिभावीनीत्यादि। अलेजानि पद्मानि षष्ठ्य तत्पुरुषे कृती त्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव तारा णां परिभावीनि तिरस्कारीणि ततश्चेतसां मन्थीनि पीडाकारीणि अतोजनमदयितं प्रियारहितं दुन्वन्ति टुदुउपतापे सौवादिकः मन्थोद्भासपरिभूभ्यो ग्रहादित्वाण्णिनिः॥ ७४॥

परीत्यादि। हे लक्ष्मण अलेजानि पद्मानि षष्ठ्य इनजनादि ति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति सूचितं तत्पुरुषे कृतिवहुलं सप्तम्या अलुगिति परः कीदृशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीनि तिरस्का रकाणि समानीत्यर्थो वा ढंचेकृत्यथेति कर्म्मणि षष्ठी नोऽचोऽस्मा रदुर्गेरित्यादौ भूवर्ज्जनात् न णत्वं किन्तु पूर्व्वोऽदाम्नदृत्यादिना समासादिहितेस स्वादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽस्मा रित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीडकानि सर्व्वत्र ग्रहादित्वाण्णिन् अतएव अदयितं प्रि यारहितं मादृशं जनं दुन्वन्ति पीडयन्ति टुदुउपतापे अतरि स्वादित्वात् नुः॥ ७४॥

सर्व्वत्र दयिताधीनं सुव्यक्तं रामणीयकं। येन जातं प्रियापाये कद्वदं हंसकोकिलं॥ ७५॥

सर्व्वत्रेत्यादि। हे लक्ष्मण सर्व्वत्र यत्किञ्चिद्रामणीयकं रमणी यस्य भावः योपधाद्वुञ् तत्सर्व्वं दयिताधीनं दयितायत्तं अवश्य

चेत्यादिना ङः सुव्यक्तं स्पष्टं कृतः येन प्रियायाअभाव सति हंसकोकिलं हंसाश्च कोकिलाश्चेति प्रकृतिस्वात् द्वन्द्वैकत्वं कद्वद् कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वदति रथवदयो श्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिदमिति ॥ ७५ ॥

सर्व्वञ्चेत्यादि । हे लक्ष्मण रामणीयकं यत्किञ्चित् रमणीयत्वं तत्सर्व्वञ्च दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव कथमित्याह येन हेतुना प्रियायाअपाये विरहे सति हंसको किलमपि कद्वद् कुत्सितवादिजातं यदा प्रीतासीत्तदा मधुरा लापीदमासीदिति भावः कुत्सितं वदतीति कतकपचिरथवद् इति कद्वादेशः रमणीयस्य भावइति विकारसंघेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः ॥ ७५ ॥

पक्षिभिर्विनुदैर्यूनां शाखिभिः कुसुमोत्किरैः । अशो
योऽयमत्र वा नास्ति प्रियाप्रश्लोभवेन्न सः ॥ ७६ ॥

पक्षिभिरित्यादि । उदर्दिहिंसानादरयोरित्यस्मादिगुपधः कः यूनां विनुदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च प्रीत्यादिना दिभिः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्व्ववत् कः कुसुमा नामुत्किराः कृद्योगलक्षणां षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा सप्रश्लोभ भवेत् प्रकर्षेण ग्लायति प्रग्लः आतश्चोप सर्गेकः योऽज्ञः गुणदोषानभिज्ञः पूर्व्ववत्कः यस्य प्रियोनास्ति तस्य प्रग्लोभावः सर्व्वत्र विवेकित्वात् प्रीणातीति प्रियः इगुप धेति कः ॥ ७६ ॥

पक्षिभिरित्यादि। पक्षिभिः शाखिभिश्च यएव जनः प्रश्लीभूता निमाच भवति सोजनोऽत्रोगुणदोषाणभिज्ञोभवति यस्त वा आ नोऽपि प्रियोजनोनाधिः सर्व्वच विरक्तत्वात् सलक्षदिषोऽभिद्युः प्रियानुरक्तश्चेति भावः पक्षिभिः शाखिभिश्च कीदृशैः चूनामर्थादि रचितां विह्वदैर्हिंसकैः शाखिभिः कीदृशैः कुसुमोत्किरैः पुष्पवि क्षेपकैः इदुत्रभिर्नादरैच चकारात्तिंषायां इत्रविक्षेपे प्रागनो धने प्रीञप्रीतौ एभ्यः इगुपधाप्रीजुकः इति कः उपेक्षतीति कर्म्मणि षष्ठी प्रभ्याचनीति प्रश्न: एषोऽस्मित्याद्यत्यच अस्तीति विषय सप्तमी इगजनादिति कः॥ ७६॥

ध्वनीनामुद्गमैरेभिर्मधूनामुद्भयैर्भृशं। आजिघ्रैः पुष्पगन्धानां पतङ्गैर्म्र्लपितावयं॥ ७७॥

ध्वनीनामित्यादि। पतङ्गैर्भ्रमरैर्म्र्लपिताः पीडितावयं म्लाक्षा बनुवमां चेति णिलात् इस्वः पतेरङ्गच्पक्षिणीत्यौणादिकः ध्वनी नामुद्गमैः ध्वनीन् कुर्व्वद्भिः आधातोः पाघेति शः पाघ्राधेति धमा देशः मधूनामुद्धयैःमधूनि पुनःपुनः पिवद्भिः धेट्पानइत्यस्मात् देशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् घ्रवद्भिः पाघ्रा चेति शः कर्त्तृयोगलक्षणा षष्ठी॥ ७७॥

ध्वनीनामित्यादि। एभिः पतङ्गैर्वयं म्लपिताः पीडिताः विशे षेण मधिमा भ्रमरैरिति गम्यते इनिरित्युक्तोनिर्दिष्टत्वेन वा कीदृशैः ध्वनीनां गुञ्जितानां उद्गमैः कारकैः मधूनां उद्धयैः पा

नकारिभिः पुष्पगन्धानां आजिघ्रैः घ्राणकारिभिः भृशमत्यर्थ मिति सर्वत्र क्रियाविशेषणं आङ्ध्माग्निपुतौ ध्वनौ अनेकार्थत्वा द्व करोत्यर्थः धेट्पाने घ्रागन्धोपादाने एभ्यो धेट्दृशपाघ्राध्मः शइति शिस्वात् ख्यादानपाघ्रेत्यादिना आधम आजिघ्र पतङ्गः पक्षिसूर्य्ययोः पतोगच्छतीति सर्वजहारङ्गमइत्यादिना खे निपा तः ध्यायतेर्ध्यन्तस्य ध्यक्षलस्त्वेति वा ह्रस्वः ॥ ७७ ॥

धारयैः कुसुमोर्म्मीणां पारयैर्व्वाधितुं जनान् । आ
लिभिर्हा हताभूयोहृदयानामुद्देजयैः ॥ ७८ ॥

धारयैरित्यादि। हा कष्टं आलिभिर्द्रुमैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये ऊर्मयः भङ्गाः प्रकाशावा तान् धारयद्भिः ऊर्म्मिस्तरङ्गे पीडायां वेगे भङ्गप्रकाश योः। उत्कण्ठासम्बन्धे पयोधिषु च प्रकीर्त्तितइति विश्वः समूहे ऽपीति अतएव जनान् मद्विधान् वाधितुं पारयद्भिः शक्तैः हृदया नामुद्वेजयैरुत्कण्ठाजनकैरिति भावः धृञ्धारणे पृपालनपूरण योः एजृकम्पने च एभ्यो णिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादि ना शः उदेजीति सूत्रे निर्देशात् अनुपसर्गादिति न निषेधः॥ ७८॥

धारयैरित्यादि। हा कष्टं आलिभिर्द्रुमैरेवं भूयोऽत्यर्थं हताः कीदृशैः कुसुमानामूर्मयः प्रकाशाः सङ्घावा तेषां धारयैः धारकैः अतएव जनान् वाधितुं पीडयितुं पारयैः पारयद्भिः शक्तैः हृदयानामुद्वेजयैः उत्कम्पकैः धृञ्स्थितौ पृ पालनपूर

षयोः ह्रस्वान्तोजुहोत्यादिः दीर्घान्तः क्र्यादिकश्च एतन्मध्ये उत्पूर्व्वः एभ्यः श्रेरवस्यन्तेभ्यः वाहिमातीत्यादिना शः पारस्करी रवत् इत्यस्य न ग्रहणं प्रेरवस्यन्तेः साहचर्य्यात् अगेरिति प्रति षेधेऽपि उद्देजेः शः कृत्तद्धितसमासानामभिधानं नियामक मित्युक्तेः उर्म्मिस्तरङ्गे पीडायां वेगे सङ्कुप्रकाशयोः। उत्क एठावस्त्रसङ्कोचकोषयोरपि कीर्त्तितेति विश्वः समूर्द्दति जय मङ्गला ॥ ७८ ॥

ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमं। लिम्पै
रिव तनोर्व्वातैश्चेतयः स्याज्ज्वलोन कः ॥ ७९ ॥

ददैरित्यादि। वातैर्ददैः दुःखस्य दुःखं ददद्भिः केभ्योमादृग्भ्यः अस्मादृशेभ्योविरहिभ्यः त्यदादिषूदृश इति क्विन् दृङ्गवतुक्वि त्याकारः धायैरामोदमुत्तमं आमोदं प्रियासङ्गमेन हर्षं यावत् विरहिभ्योदत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणं उत्तममामोदं धायैः कुसुमानां परिमलं धारय द्भिरिति व्याख्याने अनित्यत्वात् कृत्प्रयोगे कर्म्मषष्ठ्यभावः लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव वातैर्हेतुभिः कोनाम विरहाग्निना दह्य मानः ज्वालाज्ज्वलनग्निरिव न स्यात् किन्तु भवेदेवेति भावः ददैर्धायैरिति श्याद्व्यधेति आकारान्तलक्षणे णे प्राप्ते ददातिद धात्योरिति शाषीभवतः शे आतोलोपः शेतुमुक् लिम्पचेतश इति अनुपसर्गादिति शः ज्वलइति ज्वलिति कसन्तेभ्योणइति णस्य विकल्पपाठात् ॥ ७९ ॥

दद्रैरित्यादि। कश्चेतयचेतनावान् जनोऽर्थादिरहो वाते र्धेतुभिर्व्वीजन स्यात् अग्निरिव न भवति सायुभिश्चेतःसन्तोषात् कर्म्मण्येव अघो होमिमान् स्यादिति या केवलं मद्विधानां विरहिणां कष्टमित्याह माहम्योदुःखस्य दद्रैर्हातभिः यतः उत्तममामोदं पुष्पसम्भिन्नं धार्य्यैर्धारयद्भिः क्वचिद्विशेषेऽपि सामान्यमद्विशिष्टिति न्यायात् ढधेञतीति कर्म्मणि षष्ठीं बाधित्वा कर्म्मणि येत्यादिना द्वितीया तनोर्देहस्य लिम्पैर्लेपकारिभिरिव दद दाने पचादित्वादच् भस्मेव दह्यते इति तदादिभवत्समाने त्यादिना कर्म्मणि क्विप् भेर्क्कांउधातुधारणे पुष्टौ दायंश्चकस्त्वात् यथसधेन तनदत्त इत्यदति नः वर्ज्जिस्त्कृदिपातः जिलि पेश्मज्ञलेपे साहियातीत्यादिना शः मुचादित्वात् नुम् चितक कम्पने इत्यस्मात् अभिधानात् शः घेटहमेत्यत्र योगविभाग इत्यन्ये साहियातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमि त्यन्ये अव्ययव्यञ्जनलिपेः इत्सौभूज्यसेत्यस्यामदृष्टिपक्षे यथा दित्यादिना ॥ ७९ ॥

अवश्यायकणाश्चावाश्चारुमुक्ताफलत्विषः। कुर्व्वन्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः ॥ ८० ॥

अवश्यायेत्यादि। अवश्यायत इत्यवश्यायः तस्य कणा बिन्दवः आस्रवन्तीत्यास्रावाः क्षरन्तः श्याश्रुधेत्याः णः कर्त्तरि तयोर्विशेषण समासे राजदन्तादिति परनिपातः ते कुर्व्वन्ति चित्तसंस्रावं संस्रव

तीति संस्राव: पूर्व्ववत्: चित्तं संस्रावं चलत्कुर्व्वन्ति इत्यर्थं पूर्व्ववत् समासपरनिपातौ कीदृशास्तत्पर्णायसंस्थिताः अतएव चारुमुक्ताफलत्विषः दर्शनीयमुक्ताफलानुकारिणः शीताधारमुक्ताफलानि स्मारयन्तीत्यर्थः॥ ८०॥

अवेत्यादि। अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्व्वन्ति अवश्यायस्य नीहारस्य कणाबिन्दवः आस्रवन्तीति आस्रावाः कर्म्मधारये गमकत्वात् विशेषणस्यापि परनिपातः स्रुमतौ दुलीभूत्वेत्यादिना पचे णः चित्तस्य तत् संस्रावं चलचेति पूर्व्ववत् कीदृशाः चलतां पत्राणां अग्रेषु संभृताः चलन्तश्च ते पत्रायसंभृताश्चेति वा स्थूलीभूतागलिता इत्यर्थः अतएव चारवः शोभनत्विट् दीप्तिर्येषु ते तथा शीताधाररक्षितानि मुक्ताफलानि स्मारयन्त इत्यर्थः श्यैङ्गतौ षङि यमङित्कृदिष्यात इति यम्॥ ८०॥

अवसायोभविष्यामि दुःखस्यास्य कदा न्वहं। न जीवस्यावहारोमां करोति सुखिनं यमः॥ ८१॥

अवसायइत्यादि। कदा नु काले अहं दुःखस्यानुभूयमानस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थः अवस्यति इति अवसायः अन्तकर्म्मणि अवहरतीत्यवहारः श्याद्व्यधेति सर्व्वत्र णः युक्॥ ८१।

अथेत्यादि। नु प्रश्ने वितर्के वा कदा अहं अस्य दुःखस्य अवसायोऽन्तकरोभविष्यामि येन जीवस्यावहारोऽपकारको भूत्वा

अद्यापि यमोमां दुःखिनं न करोति विना मरणं न दुःखमपगमि ष्यतीत्यर्थः पीयनाभे वज्र् हत्यां आभ्यामेवपूर्व्वाभ्यां अवव्यधेन तमद्रावच्चवदति घः ॥ ८१ ॥

दग्धोऽहं मधुनोलेहैर्दावैरुग्रैर्यथा गिरिः। नायः कोऽत्र भवेन स्यां यताहं विगतज्वरः॥ ८२ ॥

दग्धोऽहमित्यादि। मधुनोलेहैर्भृङ्गैः अहं दग्धो ष्याद्युधेति णः दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् अत्र कोनायः भवतीति नायः उपायः ईप्सितप्रापकः उभयत्र दुन्योरिति णः येन नायेन विगतज्वरः विगतपीडः स्यामिति आशंसायांलिङ् यत खेदे ॥ ८२ ॥

दग्धइत्यादि। मधुनोलेहैर्मधुलिड्भिर्भ्रमरैरहं दग्धो कर्मणि क्तो यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दह्यते तद्वत् अत्र भवेको नायोऽभिमतप्रापकउपायः येनाहं विगतज्वरोविगतसन्तापः स्यां नु प्रश्ने वितर्के वा यत खेदे असेःश्यांलोपोऽस्त्यधोरिति अका रलोपः लिहौञ्ज्वलादि पचादित्वादच् टुदु उपतापे दुगतौ वा णीञ् प्रापणे दुनीभूज्वलेति वैकल्पिकोणः दवोदावोवनारण्यव ह्निरित्यमरः ॥ ८२ ॥

समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे। दृष्ट्वा गृ ह्णान् भरस्येव यनात्तान्मम मानसं ॥ ८३ ॥

समाविष्टमित्यादि। वनान्तात् वनपर्य्यन्तात् स्मरस्य कामस्य गृहमिव उन्मादकत्वात् गेहेकइति गहेःकः अर्द्धर्चादिपाठात् पुंलिंगता स्थितस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्तृकत्वं मानसस्येतः स्रोतिविग्रहः ग्राहेणेवाक्रमर्णवे अर्णः पानीयं यत्रास्तीति केशादोऽन्यतरस्यामिति तत्रार्णसीलोपस्येति भ्रमणि स्त्राप्रशंसास्वित्यादै वः सलोपस्येति अर्णवे समुद्रे वर्त्तमानेन ग्राहेण कुंभीरादिना आत्तं गृहोतं आङ्पूर्व्वस्य दाञोऽयउप सर्गात्तः॥ ८३॥

समेत्यादि। वनान्तात् वनस्वरूपात् तत्समीपदेशात् वा दृष्टा स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आस्कन्दीकृतमिव इत्यर्थः उपप्लुतत्वात् समुद्रे ग्राहेण कुम्भीरादिना आत्तं गृहीतमिव अतिगभीरशोकमग्नत्वेऽपि कामपोडितत्वात् स्थितस्येत्यध्याहारेणैककर्तृकत्वे पूर्व्वकाले क्वाच् वनान्तात् कीदृशात् स्मरस्य गृहानिव ग्रहेः सूर्य्यादै अन् जलजन्तौ घञ् निलयेऽलिङ्गाभिधानात् गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाइत्यमरः आङ्पूर्व्वदाञः क्त ग्यचस्वेति पचे तादेशः अर्णोजलं विद्यते अस्येति केशादित्वात् वः मनोषादित्वात् सलोपः मनएव मानसं स्वार्थे ष्णः केचित्तु मनएव आनातीति व्यवहारात् मनसएव दर्शनकर्तृत्वं विवक्षितमित्युक्त्वा स्थितस्येति नाध्याहरन्ति अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहरइति विश्वः॥ ८३।

वाताहतिचलच्छाखा नर्त्तकाइव शाखिनः। दुःसहाद्दी परिक्षिप्ताः कणद्भिरलिगायकैः॥ ८४॥

वातेत्यादि। हा कष्टं एते शाखिनः नर्त्तका इव शिल्पिनिष्वुन् दुःसहा दुःखेन सह्यन्त इति ईषदित्यादिना खल् नर्त्तकैः साधर्म्यमाह वाताहतिचलच्छाखावाताहतिभिः चलन्त्यः शाखावाहव इव येषां ते अलयो भ्रमरा गायका इव गायकन् तैश्च परिक्षिप्ताः परिवेष्टिता इति ॥ ८४ ॥

वातेत्यादि। एते शाखिनो दुःसहा दुःखेन सह्यन्ते ईषद्दुःसो रिति खल् हो विषादे नर्त्तका इव नृत्यन्तीति नृत्खनरञ्ज इति षकः नृतादेः शिल्पिनि कष इति परः स्वमते शिल्पिविशेषोऽर्थाद्गम्यते नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभिश्चलन्ती शाखा बाहुतुल्या येषां अलयो भ्रमरा एव गायका गायनास्तैः परिक्षिप्ताः परिवेष्टिताः गायन्तीति गायनट्ण्यकाविति ण्यकः गायतेरैतो लोपे इति इत्यादुक्तत्वात् गैं गाने इत्यस्यैव ग्रहणं न तु गाङः क्वणद्भिः शब्दायमानैः ॥ ८४ ॥

एकहायनशारङ्गगती रघुकुलोत्तमौ। लवकौ
शत्रुशक्तीनामृष्यमूकमगच्छतां ॥ ८५ ॥

एकहायनेत्यादि। रघुकुलोत्तमौ रामलक्ष्मणौ ऋष्यमूकम् अगच्छतां गतवन्तौ लङि रूपं हायनः संवत्सरः स एको यस्य सारङ्गस्य मृगस्य तस्येव गतिर्ययोः शीघ्रगामित्वात् हश्च व्रीहिकालयो रिति हाधातोर्ण्युट् आतो युक् तौ शत्रुशक्तीनां लवकौ अपनेतारौ मुहुर्लवौ समभिहार इति वुन् तत्समभिहारग्रहणं साधुकारित्वोपलक्षणार्थं ॥ ८५ ॥

एकेत्यादि। एतद्वचनानन्तरं रघुकुलस्य उत्तमौ श्रेष्ठौ रामलक्ष्मणौ ऋष्यमूकं पर्व्वतं अगच्छतां कीदृशौ एकहायनसारङ्गगती एकोहायनोवत्सरोवयोयस्य तादृशस्य सारङ्गस्य हरिणस्येव मृगस्येव वा गतिर्गमनं ययोः शीघ्रगामित्वात् अह्नातेर्णिनटिहायनोनिपातितः हाङोरूपमित्यन्ये भवुभ्रमीणां,लवको छेदको लुनातेः पुत्रलुवल्वोऽकः इत्यकः शृादेः साधुकारिण्यर्थेऽकइति परः सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे॥ ८५॥

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः। बन्धुना विगृहीतोऽहं भूयासं जीवकः कथं॥ ८६॥

तावित्यादि। तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्य्येषु प्रणिधिः उपसर्गेघोःकिः बन्धुना भ्रात्रा विगृहीतो विरोधितः सन् कथं जीवकोभूयासमिति आशंसायां लिङ् जीवेराशिषिवुन्। इति निरुपपदकृदधिकारः॥ ८६॥

तावित्यादि। रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् बन्धुना वालिना विगृहीतो विरोधितो ऽहं कथं जीवकोभूयासं प्रणिधीयते कर्म्मणि प्रयुज्यतेऽसाविति दासंज्ञकत्वात् किर्दोऽन्सर्गेरित्यनेन भावविहितोऽपि किः कर्त्तुः कभावइत्युक्तेरच कर्म्मणि बोध्यः केचित्तु कभावेऽमीइत्यस्मात् मण्डूकसुताधिकारादच कभावइत्यनुवर्त्तते इष्टौ तु कारकानु

यदेशो लिपिकरमकाद्यात् दृष्टान्तः कास्यातिं जीवलेरकः। इति निरुपपदाधिकारः ॥ ८६ ॥

प्रभुलावौ मन्यानौ राघवौ मलयं गिरिं। जगाम सपरीवारो व्योममायमिवोत्थितं ॥ ८७ ॥

इतः प्रभृति सोपपदं सप्तमीस्थमिति अस्योपपदस्यानेन कृतो दर्शयन्नाह सइत्यादि। ससुग्रीवः सपरीवारः सपरिकरः। उपसर्ग स्येति दीर्घः कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ प्रभुलावौ प्रभून् लुनातीति कर्मण्यण् प्रभूणामनुकूलकाविति मन्यानौऽवगच्छन् मनुबोधनस्मादात्मनेपदिनस्तनादिभ्य उः व्योम मायमिवोत्थितं व्योम आकाशं मिमीत इति क्वावामस्येत्यण् नभः परिच्छेत्तुमिवोत्थितं कियत्प्रमाणमस्येति ॥ ८७ ॥

अथ सोपपदाधिकारः। कर्मात् पराङ्गतोः प्रत्ययास्तदुपपदं सइत्यादि। ससुग्रीवो राघवौ प्रभुलावौ प्रभूणां छेदकौ मन्यानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योम मायं आकाशस्य परिमाणं कुर्वाणमिव उत्थितं अतिदैर्घ्यादियमुत्प्रेक्षा प्रभून् लुनातीति व्योम मातीति च ढात्तृपण्यनज्ञिल्कृदिति मातीयत् मनदकबोधे किस्सार्थं दित्वामनादिः परिपूर्वाद् वोचक् परिकारस्य दीर्घत्वमभिधानात् ॥ ८७ ॥

अमोदं मारुतिं दूतं विषमस्थः कपिद्विपं। शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः ॥ ८८ ॥

शर्मदमित्यादि। कपिकुंजरः सुग्रीवः हनुमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृन्दारकनागकुंजरैरित्यादिना कर्मधारयः कः वृत्तान्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यां युजेरित्यात्मने पदं रुधादित्वात् श्नम कपिकुंजरः किंभूतः विषमे दुर्गपर्वते तिष्ठतीति विषमस्थः सुपिस्थ इति कः मारुतिं कीदृशं शर्म कल्याणं ददातीति शर्मदः आतोऽनुपसर्गे क इति कः श्रेष्ठत्वमाह कपिद्विपं कपिश्रेष्ठं द्वाभ्यां पिबतीति द्विपः कपिरयं द्विप इव उपमितं व्याघ्रेत्यादिना कर्मधारयः पुनः कीदृशं शोकापनुदं शोकमपनुद इति तुन्दशोकयोरिति कः अव्ययं सुचित्तमित्यर्थः॥ ८८॥

शर्मदमित्यादि। कपिकुञ्जरः सुग्रीवो मारुतिं हनूमन्तं दूतं प्रायुङ्क्त प्रस्थापितवान् वृत्तान्तं ज्ञातुमित्यर्थात् कीदृशः विषमस्थः विषमे कृच्छ्रे तिष्ठतीति सुपि स्थ इति कः एवम्भूतोऽपि महासत्त्वत्वादव्ययोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अव्ययः अक्षोभितमनाः कीदृशं मारुतिं शर्म ददातीति शर्मदं सुखदायकं पूर्ववत् कः शर्मशातसुखानि चेत्यमरः कपिद्विपं कपिश्रेष्ठं शोकमपनुद इति शोकापनुदं तुन्दशोकयोः परिमृजापनुदोरिति कः कपिर्द्विप इव कपिः कुञ्जर इव गमकत्वात् विशेषणस्यापि परनिपातः द्वाभ्यां पिबतीति द्विपः पूर्ववत् कः कुञ्जो दन्तो विद्यतेऽस्येति मध्वादित्वात् रः कुञ्जकुञ्जे निकुञ्जेऽपि दन्तो दन्तीऽपि दन्तिनामिति विश्वः मारुतस्यापत्यमिति वाक्ये अत इञ् मारुतिः आञ्जनेयो हनूमान् स्याद्धनुमानपि मारुतिरिति कोषः अव्ययमिति क्वचित् पाठः तादृशस्य दूतस्य योग्यत्वात् युजेर्ण्यौ रुधादित्वात् श्नम् मयो वेऽस्याविति माद्रेशः॥ ८८॥

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः। चित्तसंख्यो जिगीषूणामुत्पपात नभस्तलं॥ ८९॥

विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात विश्वासं प्रददातीति विश्वासप्रदः प्रेदाज्ञ इति कः विश्वासप्रदोवेशोयस्य भिक्षुवेष इत्यर्थः वेश्यते आत्मानेनेति अकर्त्तरि च कारके घञ् विषव्याप्तावित्यस्य रूपं पन्थानं प्रजानातीति पथिप्रज्ञः समाहितः अभ्रान्तचित्तः इदञ्च मया तत्र वक्तव्यमिति जिगीषूणां जेतुमिच्छतां चित्तसंख्यः चित्तं संख्याति परिछिनत्तीति समिख्य इति कः॥ ८९॥

विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात कीदृशः विश्वासप्रदोवेशोयस्य सतथा भिक्षुवेशत्वात् शोविशप्रवेशे घञि वेशः विषिर्जिओङ्व्याप्तावित्यस्य मूर्द्धन्यान्तस्य रूपमित्यन्ये पन्थानं प्रजानाति इति ज्ञगृज्ञाप्रीति कः समाहितः अभ्रान्तचित्तः जिगीषूणां जेतुमिच्छूनां सपत्नाणां परपक्षाणाञ्च चित्तं संख्याति परिछिनत्तीति हनअनादिति डः संपूर्व्वस्य ख्याञ्ख्यानावित्यस्य प्रयोगी नास्तीति ये वदन्ति तन्मते चक्षिङोरूपं तदा चक्षिङः कशात्रख्याञावे इत्यत्र अर इति विषयसप्तमी॥ ८९॥

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः। ऋष्यमूकमगाकृष्णैः प्रगीतं सामगैरिव॥ ९०॥

सुरापैरित्यादि। मारुतिर्ऋष्यमूकमगात् शाखिभिरुपलक्षितं घूर्णद्भिः कम्पमानैः पवनाहतत्वात् अतएव सुरापैरिव मत्तैरिव

गायीष्टुगिव्यच सुरापीध्वोरिति टक् प्रगीतं प्रगीयतेऽस्मेति अधि करणे क्तः कैर्भृंगैः सामगैरिव सामवेदपाठकैरिव गायन्तीति टक्॥ ८० ॥

सुरापैरित्यादि। समाहतिर्ऋष्यमूकमगात् कीदृशं शाखिभि रुपलक्षितं कीदृशैः पवनेनाहतैः अतएव घूर्णद्भिः कम्पमानैः घूर्ण भ्रमभ्रमणे शतुः अतएव सुरापैर्मद्यपैरिव सुरां पिबन्तीति इन जनादिति डः भृङ्गैः प्रगीतं नादितं गीयते यत्रेति ध्रौव्यगत्येति आधारे क्तः हङ्कोःकभावदत्युक्तेः अपवादेऽप्युत्सर्गप्रवृत्तिः क्वचि दिति न्यायात् कामुकसङ्गार्थकेन इत्यनेन षष्ठीप्राप्तौ साधनस्येति त्यादिना कर्त्तरि तृतीया भावकाक्तादर्शआदित्वादति भृङ्गक र्त्तृकसङ्गीतयुक्तमिति वार्थः प्रकृष्टं गीतं यत्रेति वा सामगैरिव सामवेदं गायन्तीति इनपरगष्टक्॥ ८० ॥

तं मनोहरमागत्य गिरिं वर्म्महरौ कपिः। वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः॥ ८१ ॥

तमित्यादि। ऋष्यमूकं गिरिमागत्य कपिर्वीरौ रामलक्ष्मणौ अवोचत् उक्तवान् कीदृशं मनोहरं रम्यत्वात् मनोहरतीति हर तेरनुद्यमनेऽच् वर्म्महरौ कवचं हर्त्तुं क्षमौ संभाव्यमानवयसावि त्यर्थः वयसिचेत्यच् सुखाहरः सुखाहरणशीलः आकृिताकोऽय इत्यच् भिक्षुः परिव्राट्वेशः न कपिरूपः यतोऽविश्वासप्रदवेश इत्युक्तं भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः भिक्षामर्हतीत्यच्॥ ८१ ॥

तमित्यादि। तं ऋष्यमूकं गिरिं आगत्य आगम्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान् गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादच् मनसो हरः मनोहरः कीदृशौ तौ वर्म्महरौ कवचधरौ पूर्व्ववदच् कपिः कीदृशः सुखाह रः सुखकारी अनयोस्तयोः पूर्व्ववदच् परे तु वयसि कर्म्मणः परात् हञोऽच् वयोबोधकवचने च आङ्पूर्व्वात्तु ताच्छील्य एवेत्याहुः तन्मते मनोहरमीति मनोहरत्वं वयसि तु भारहारदत्यादि बोध्यं वर्म्म हर्त्तुं शक्तौ वर्म्महरौ अच सम्भाव्यमानं वयो गम्यते तत्पादित्यर्थः सुखमाहर्त्तुं शीलमस्य सुखाहरः भिक्षु र्यतिरूपः भिक्षुवेशोवा यद्भिक्षाश्चकः भिक्षार्थविषयः भिक्षा योग्यशरीरः भिक्षुवेशपरिग्रहात् ननु वानरमूर्त्तिः विश्वासप्रदवेश इत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादच् ॥ ८१ ॥

बलिनावमुमद्रीन्द्रं युवां स्तम्बेरमाविव। आचक्षा यामितः कस्माच्छङ्करेणापि दुर्गमं ॥ ८२ ॥

किमवोचदित्याह बलिनेत्यादि। युवां अमुं अद्रीन्द्रं कस्मात् कारणादितः प्राप्तौ इण्गमावित्यस्मादर्त्तमानसामीप्ये भूते लट् थस् एतदाचक्षाथां कथयतं चौढि रूपं बलिनौ बलवन्तौ यत् शंकरेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते काविव स्तम्बेरमाविव यथा मत्तद्विपौ प्राप्तुतस्तद्वत् स्तंबकर्णयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शंकरइति शमि धातोरित्यच् ॥ ८२ ॥

वसीत्यादि। किमर्थोऽचरित्याह युवां अमुं अद्रीन्द्रं ऋष्यमूक
कस्मात् कारणात् इयः प्राभुवः इयन्तौ भूतधामीष्टौ को अभि
धानात् एतत् युवाभ्यां वाच्यं कथयतं प्रार्थनायां लोट् अद्रीन्द्रं
कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यत इति ईषद्दुः
सुरिति खल् अतएवाच गमनात् युवां बलिनौ बलमस्ति अनयो
रिति नैकाजादिति इन् अथातिशयेन अस्मर्यौ बोध्यः। तथा च
भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां
भवन्ति मतुबादय इति सम्भेरमाविव हस्तिनौ यथा प्राभुय
स्तद्वत् स्तम्बेरम इति पचादित्वादच् अभिधानात् अलुक्
हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः खकुष्ट इति टः
अभिधानात् संज्ञा गम्यते॥ ९२॥

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः।
तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरं॥ ९३॥

उक्तष्टाधिकारः।

व्याप्तमित्यादि। दुर्गमत्वदर्शनाय इदमुच्यते कीदृशमद्रीन्द्रं
क्रव्यमपक्वमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षसैश्च
तैर्व्याप्तं क्रव्येचेति विट् गुहाशयैः गुहायां शेरते इति शीङोऽधि
करणेऽच् तुंगाः उच्चाः शैलाः शिलाश्च भवाश्च तरवस्तैश्छन्नं
व्याप्तं अतएव मानुषाणामगोचरं अगम्यं गोचरसंचरेत्यादिना
निपातितः॥ ९३॥

व्याघ्रमित्यादि। दुर्गमत्वं दर्शयन्नाह अद्रीन्द्रं कीदृशं क्रव्याद्भिः किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति क्विप् क्रव्य शब्दादद: पक्षे क्विप् अपक्षेऽण् क्विपाविति पर: समते पक्षापक्षवि शेषायुक्तौ न चतिरर्थागतिश्रयत्वात् कीदृशः गुहाशयैः गुहायां शेरतइति पचादित्वादच् शीङोऽधिकरणादचेति परसूत्रं क्रूरै र्निर्दयैः कठिनैर्व्या सनिशाचरैः राक्षसस्थितैः पुनः कीदृशं तुङ्गै ततश्चक्रं तुङ्गैः शैलैरुरभिश्च द्रुमं सर्व्वतोव्याप्तं अतएव मानु षाणामगोचरं अगम्यं। द्विषन् वनेचराणामित्यारभ्य चरा देष्टइत्यादिप्रकरणस्य प्रागुक्तत्वात् अत्र तत्त्यागइत्यतआह उक्त स्याधिकारइति ॥ ८३ ॥

सत्वमेजयसिंहाढ्याम् स्तनन्धयसमत्विषौ। कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ८४ ॥

सत्वमित्यादि। युवामिमान् मार्गानागतौ सत्वमेजयसिंहाढ्यान् सत्वमेजयन्ति ये सिंहाः एजेः खश् अरुर्द्विषेति मुम् तैराढ्यान् व्याप्तान् सिंहग्रहणं तदङ्गिलोपलक्षणार्थं हिनस्तीति सिंहः पृषो दरादित्वाद्वर्णविपर्य्ययः नाडिन्धमानिति उच्चनीचाधिरोहणान्मु हुर्मुहुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्ट्योश्चेति खश् खित्यनव्यय स्येति ह्रस्वः विषमोपलान् उन्नतपाषाणयुक्तान् स्तनन्धयसमत्वि षौ बालवत्सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयतः पिबतः नासिकास्तनयोरिति खश् अरुर्द्विषदिति मुम् ॥ ८४ ॥

अथ खशाद्यधिकारः सत्वमित्यादि। युवां कथं इमान् मा र्गान् आगतौ एतत् भूतमिति वक्ष्यमाणश्लोकेनान्वयः कीदृशान्

बलमेजयद्भिंस्तस्मात् तस्मात् माभिनएजयन्ति कम्पयन्ति भीषय न्तीति यावत् ख्शेजेरिति खश् खित्यनव्ययस्येति मन् तादृशायैर्भि शतैरायुधैः आत्मान् छिनत्तीति भिदः पषादित्वादच् निपात नात् वर्णविपर्य्ययः मांछिन्दमान् मुहुर्मुहुर्धातौर्भिः शरैर्धमन्ति उपतापयन्तीति नाडीमुष्टीस्तनेत्यादिना खश् ध्मादानपेत्या दिना धमादेशः पूर्व्वेण मन् कृतस्य विषमोपलान् उन्नतानत प्रस्तरयुक्तान् युवां कीदृशौ स्तनन्धयसमलिषौ स्तनंधयति पिब तीति स्तनन्धयो बालकः पूर्व्ववत्खश् मन् च तेन समा लिट् दीप्ति र्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्देनार्थात् तद्दीप्तिरुप लक्ष्यते दीप्तौ तत्समलमुचितं परम्परया धर्म्मिसाम्यं धर्मसाम्यं वा गम्यते ॥ ८४ ॥

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः। आ सादितौ कथं मतं न गजैः कूलमुद्रुजैः ॥ ८५ ॥

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितोनदीरु त्तीर्णौ भीमास्त्रासकरी यतः कूलमुद्वहाः कूलमापूर्य्य वहन्त्यः उदिकूलइति खश् गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासा दितौ न व्यापादितौ इति मतं कथयतं ॥ ८५ ॥

उत्तीर्णावित्यादि। कथं वा युवां सरितोनदीरुत्तीर्णौ तर णमपि गतिः तेन गत्यर्थाकर्म्मकेत्यादिना कर्त्तरि क्तः कीदृशीः कूलमु द्वहाः कूलान्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा

अतएव भीमास्त्रासकरीः मज्जैर्हस्तिभिः कथं वा युवां नायादितौ न प्राप्तौ न मर्द्दिताविति भावः कथंचि कः कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतद्युवां मूतं कथयतं उभयत्र कूला द्रुद्रुजवहरति खश् खित्यव्यामिति मम् ॥ ८५ ॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिं। ऐव विद्वन् पितुः कामात् पान्तावल्पंपचान्मुनीन् ॥ ८६ ॥

रामइत्यादि। हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यतइति दीर्घः हनूमान् हनुमानपीति विश्वदर्शनात् द्वैरूप्यं तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुरयं भग्नमिति श्रूयते तं रामोऽवोचत् उक्तवान् तत् किमित्याह हे विद्वन् यद्यमुं गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात् आङ्पूर्व्वादिणोलङि रूपं अभ्रंलिहमुच्चैस्तरं अभ्रंलेढीति वहाभ्रेलिहइति खश् किं कुर्व्वाणौ पान्तौ रक्षन्तौ मुनीन् अल्पंपचान् अल्पयज्ञानुष्ठान् अल्पं पचन्तीति मितनखेचेति मितेत्यर्थग्रहणात् खश् चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ॥ ८६ ॥

रामइत्यादि। रामोहनूमन्तं अवोचत् पर्व्वताघातभग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनूमच्छात् तस्मादेर्व्वा इति पाक्षिकजप् ततोऽयुङ्रज्जादेरित्यस्य प्रत्युदाहरणे रज्जादौ तु हनुरिति क्वचित्पुस्तके दृश्यते तत्तु लिपिकरप्रमादा

दिति केचित् नाशत्रयार्थेऽयोर्थइति केचित् हनूमान् हनुमानपीति विश्वदर्शना हूक्यमेव किमुक्तवानित्याह वै विदन् आवां पितुः कामादभिलाषादमुं गिरिं ऐव आगतौ इयोषीव अदादि त्वात् शपोलुक् अभ्रंलिहमाकाशं लेढि प्राप्नोतीति गृभृदृहशी त्यादिना अभिधानादनाचरपि खः खितीति मन् अभिधानात् गुणाभावः आवां कीदृशौ मुनीनां पान्तौ रक्षन्तौ पातरक्षणे शतुः कीदृशान् अल्पंपचान् स्वल्पसन्तुष्टान् दरिद्रान् वा घटीवा रीत्यादौ मितनखमामादित्यचार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश् अल्पं यथा स्यात्तथा पचानिति केचित् मुनिरक्षणेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः हिंसादिभयं तादृशोस्य चरितु त्तरणमपि नाशक्यमिति पूर्व्वप्रश्नेषु सर्व्वेषोत्तरं सूचितं ॥ ९६ ॥

अमितम्पचमीशानं सर्व्वभोगीणमुत्तमं । आवयोः पितरं विद्धि ख्यातं दशरथं भुवि ॥ ९७ ॥

कः पुनः पिता यदादेशादागतावित्यत आह । अमितम्पचमित्यादि । आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि ज्ञाधातुर्ध्योर्हेर्धिः अमितंपचं महामन्त्रिणं पूर्व्ववत् खश् मुम् च ततोमनुषमासः ईशानमीशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चानश् सर्व्वभोगीणं सर्व्वसलभोगाय हितं आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची अट्कुप्वादिना णत्वं ॥ ९७ ॥

अमितमित्यादि । कः पिता यदादेशादागतावित्याह आव

योः पितरं दशरथं विद्धि जानीहि उक्तयोरिधिः कीदृशं अमितमयं प्रचुरान्नप्रदं घटीघारीत्यादिना खश् पश्चान्मयूसमासः ईशानं ऐश्वर्य्ययुक्तं ईशलक्ष्मैश्वर्य्ये शानः सर्व्वभोगाय सर्व्वशरीराय हितं भुज्यतेऽनेनेति भोगः शरीरं तस्मै विकारस्येत्यादिना हितार्थे ईनः पुर्ण्योऽदान्तेरित्यादावतहादित्यस्य योगविभागात् धाम्नं उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्व्वज्ञातत्वात् ॥९७॥

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः। असूर्य्यम्पश्यया मूर्त्त्या हृता तां मृगयावहे ॥ ९८ ॥

यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह। छलेनेत्यादि। नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता कीदृशेन अरुन्तुदेन मर्म्मस्पृशा विध्वरुषोस्तुददति खश् मुम् असूर्य्यम्पश्यया आदित्यगोप्यया मूर्त्त्या शरीरेणोपलक्षिता असूर्य्यललाटयोरिति खश् तां हृतां मृगयावहे गवेषयावः मृगअन्वेषणे स्वार्थिकण्यन्तः युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह छलेन छद्मना ॥९८॥

छलेनेत्यादि। पितुराज्ञया दण्डकागमनेऽपि कथं अत्रागमनमित्याह अस्माकं दयिता अरण्याद्रक्षसा हृता कथं युवयोरग्रे हृतेत्याह छलेन छद्मना नतु बलात् कीदृशेन रक्षसा अरुन्तुदेन मर्म्मस्पृशा घटीघारीत्यादिना खश् खित्यव्याजिति मम् स्यादेः सालोपः अस्मद एकत्वे वहुत्वविवक्षा तां हृतां मृगया

वहे अन्वेषयावः मृगतृकर्म्मणि मार्गणमन्वेषणं मूर्त्या शरीरेणोपलक्षिता विशेषणे तृतीया कीदृश्या असूर्य्यम्पश्यया सूर्य्यमपि न पश्यन्त्या अतिगोप्ययेत्यर्थः पूर्व्वेण खश् स्वादानेत्यादिना दृशेः पश्चादेशः सूर्य्येण सह समासोऽगमकत्वात् ॥ ९८ ॥

प्रत्यूचे मारुतीराममस्ति वालीति वानरः। शमयेदपि संग्रामे योललाटन्तपं रविं ॥ ९९ ॥

त्वं पुनः कस्य वेत्यत आह। प्रत्यूचेइत्यादि। रामं मारुतिः प्रत्यूचे प्रत्युक्तवान् अस्ति वालीतिनाम्ना कपीश्वरः यः संग्रामे युद्धे ललाटन्तपं सर्व्वेषामुपरि वर्त्तमानं पूर्व्ववत् खश् शमयेत् पराजयेदिति सम्भावने लिङ् वालिशब्दोनाम्नः इदन्तस्य तथा च वाली वालिस्य कथ्यते इति शब्दभेदः ॥ ९९ ॥

प्रत्यूचइत्यादि। मारुतिर्हनूमान् रामं प्रत्यूचे किम्प्रत्यूचे इत्याह वालीति नाम्ना वानरोऽस्ति यः संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् शौर्य्यात्सम्भावनेति लो कीदृशं रविं ललाटन्तपं सर्व्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थः यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुतरामेवान्यायकारिणमित्यर्थः घटीखारीत्यादिना खश् ॥ ९९ ॥

उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृतः। तस्य मित्रीयतोदूतः संप्राप्तोऽस्मि वशम्वदः ॥ १०० ॥

उग्रम्पश्येनेत्यादि। तेन भ्रात्रा उग्रंपश्यता पापं विजानता उग्रंपश्येत्यादिना निपातितं यस्य सुग्रीवो निराकृतोऽभिभूतस्तस्य

हि दूतः प्राप्तोऽस्मि वशम्वदः वशमनुकूलं वदतीति वशम्वदः प्रियवशेवदःखच् कीदृशस्य मित्त्रीयतोमित्त्रमिच्छतः सुपश्चात्मनः क्यच् ॥ १०० ॥

उग्रमित्यादि। तेन भ्रात्रा वालिना सुग्रीवोनिराकृतः देशान्निःसारितः कीदृशेन उग्रम्पश्येन पापं पश्यता उग्रदर्शिना वा घटीखारीत्यादिना खश् तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि कीदृशस्य मित्त्रीयतः आत्मनोमित्त्रमिच्छतः तथा भवन्तमेव क्योऽव्ययाद्यस्येति क्यः अवर्णस्य ईस्य ततः शतृः वशमनुकूलं वदतीति वशम्वदः प्रियवशादित्यादिना खः अस्मीति क्रियापदं अस्मदर्थेऽव्ययं वा ॥ १०० ॥

प्रियम्वदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप। सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपं ॥ १०१ ॥

किन्तेन सख्येवेति चेदाह प्रियंवद इत्यादि। प्रियम्वदतया लोकोमिथ्या वदति अहं प्रियम्वदोऽपि पूर्ब्बवत् खच् परंतप शत्रूणामुपतापद द्विषदिति खच् वाचंयमपुरन्दरौ चेत्यमागमोनिपात्यते नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्त्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि रूपं कीदृशं द्विषन्तपं शत्रूणामुपतापयितारं पूर्ब्बवत्खच् ॥ १०१ ॥

प्रियमित्यादि। किन्तेन मित्त्रेणेत्याह तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्लुटि कीदृशं द्विषन्तपं शत्रूणामुपतापकं द्विभृद्द इत्यादिना द्विषच्छब्दात्तपोऽभिधानादसंज्ञा

यामपि खः मनीषादित्वात्सलोपे खित्यव्याजिति मम् जिह्वा दे ष्टीति द्विषः क्षगृध्याग्रीज्ञुङ्इति कः तस्मात्तपः खः प्रियम्वदत्वा मृषा ब्रवीषि चेदाह हे परन्तप शत्रूणामुपतापक प्रियम्वदो ऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात् द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तज्जयाय रामस्य मित्रान्तरापेक्षा युक्तेति भावः प्रियम्वद इति प्रियवशादि ति खः परन्तपेत्यत्र द्विषन्तपवत् खः॥ १०१॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते। एहि सर्व्वं सहं मित्रं सुग्रीवं कुरु वानरं॥ १०२॥

वाचंयमइत्यादि। वाचंयमपुरन्दरौ चेत्यमागमो निपात्यते तस्मात् सत्यमेतत् पूर्व्वोक्तं ब्रवीमि ते तुभ्यं तादर्थ्ये चतुर्थी यत एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वं सहतइति पूःसर्व्वयोरिति खच्॥ १०२॥

वाचमित्यादि। न मिथ्या ब्रुवइति प्रागुक्तं द्रढयन्नाह अहं अ नृते असत्ये वाचंयमो मौनी तस्माद्ब्रवीमि सुग्रीवं निहन्ताहि इति यदु क्तं एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी तस्मात् एहि आग च्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वकार्य्यक्षमं भृ तृवृइत्यादिना अभिधानादसंज्ञायामपि खः वाचंयमइति वाचा शब्दात् यमः पूर्व्ववत् खः खित्यव्याजिति मम् ह्रस्वस्य परे तु वाक् शब्दोपपदेन साधयन्ति॥ १०२॥

सर्व्वकषयशःशाखं रामकल्पतरुं कपिः। आद्या यार्भंकषं प्रायान्मलयं फलशालिनं॥१०३॥

सर्व्वंकषेत्यादि। रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः कीदृशं रामं सर्व्वंकषयशःशाखं सर्व्वं कषन्ति व्याप्नुवन्ति यानि यशांसि सर्व्वकूलेत्यादिना खश् तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रंकषमुच्चैस्तरं मलयं पूर्व्ववत् खश्॥१०३॥

सर्व्वमित्यादि। रामएव कल्पतरुः तमादाय कपिर्हनूमान् मलयं प्रायात् प्रगतः रामं कीदृशं सर्व्वं कषयन्ति व्याप्नुवन्ति सर्व्वपापं नाशयन्ति वा यानि यशांसि तान्येव शाखायस्य तं फलशालिनं अभिमतफलसम्पादनात् मलयं कीदृशं अभ्रंकषं आकाशव्यापकं अत्युच्छ्रितत्वात् फलशालिनमिति मलयस्य विशेषणात् अमापहारकत्वं सूचितमिति केचित् प्रियवशाद्वयत्त्तीत्यादिना खः॥१०३॥

मेघंकरमिवायान्तमृतुं रामं क्षमान्वितः। दृष्ट्वा मेने न सुग्रीवोवालिभानुं भयङ्करं॥१०४॥

मेघंकरमित्यादि। राममायातं दृष्ट्वा सुग्रीवोवालिनं भानुमिव भयंकरं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् क्षमान्वितोग्लानोवालिभानुना पीडितत्वात् कीदृशं रामं मेघंकरं ऋतुमिव प्रावृट्कालमिव पूर्व्ववत् खच्॥१०४॥

मेघमित्यादि। राममागतं दृष्ट्वा सुग्रीवोभानुमिव वालिनं भयङ्करं भीतिजनकं न मेने न मन्यतेस्म कीदृशः क्रमेणान्वितः स्थानः रामं कीदृशं मेघङ्करं मेघोत्पादकं ऋतुमिव वर्षाकालमिव वर्षाकालस्य सूर्य्याच्छादकत्वेन क्लान्तश्रमभयापहारित्वात् साम्यं प्रियवशाद्वयर्त्तिमेघादिति खः॥ १०४॥

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ। क्षेमङ्कराणि कार्य्याणि पर्य्यालोचयतां ततः॥ १०५॥

उपाग्नीत्यादि। उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरुतां इतःप्रभृत्यावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियमद्रेष्वण्चेति चकारात् खच् ततः सख्यकरणानन्तरं क्षेमङ्कराणि हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्ताविति त्यर्थः। पठपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि रूपं॥ १०५॥

उपाग्नीत्यादि। रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीं अकुरुतां चीतां अग्निसाक्षिकं सख्यमिति भावः अन्योन्यस्य प्रियङ्करौ प्रियं कुरुतइति क्षेमप्रियमद्रात्कृञ्ञिति खः विकारसंघेति सखिशब्दात् भावे यः ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लोचृक्भासीत्यस्य ण्यां रूपं पूर्व्ववत् खः॥ १०५॥

आश्रितस्थवमुत्कुष्टं वल्गितं प्रथितं स्थितं। बह्व मन्यत काकुत्स्थः कपीनां स्वेच्छया कृतं ॥ १०६ ॥

आश्रीत्यादि। आश्रितस्थवमश्रनं आश्रितेभुवःकरणभावयो रिति खच् उत्कुष्टं किलकिलायितं वल्गितं धावनं तथा प्रथितं स्थितञ्च कपीनां स्वेच्छया कृतं एतत्काकुत्स्थोवह्वमन्यत श्लाघितवान् पुण्यभाजइमे यदेषां स्वेच्छाविहारिणां चेष्टितं अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति सर्व्वत्र भावे निष्ठा ॥ १०६ ॥

आश्रितमित्यादि। आङ्पूर्व्वादश्नातेः क्त आश्रितस्य दृप्तभोजनस्य भवनं आश्रितस्थवं भावघेलाश्रिताद्भुव इति खः उत्कुष्टं शब्दकरणं वल्गितं गमनं प्रथितं प्रथनं पृथीधृषेत्यादिना गुणः स्थितं अवस्थानं दोषोमास्थामिति क्तिः सर्व्वत्र भावे क्तः कपीनामेतत्सर्व्वं स्वेच्छया कृतं काकुत्स्थोवह्व अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति भावः स्वभावसिद्धत्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥ १०६ ॥

ततोवलिन्दमप्रख्यं कपिर्विश्वम्भराधिपं। सुग्रीवः प्राब्रवीद्रामं वालिनोयुधि विक्रमं ॥ १०७ ॥

ततइत्यादि। ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् सञ्चिमुवदिट् किमुक्तवान् वालिनोयुधि विक्रमं शौर्य्यमिति प्रधान

कर्म राममित्यकथितं कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां भृतॄवृजीत्यादिना खच् अमन्तस्य मित्व इस्वत्वे तथा विश्वं विभर्त्तीति विश्वम्भरा तस्या अधिपं अधिपातीत्यधिपः आतश्चोपसर्गइति कः॥१०७॥

ततइत्यादि। कार्य्यालोचनानन्तरं सुग्रीवः कपिर्युधि संग्रामे वालिनोविक्रमं रामं प्राब्रवीत् रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्त्रिविक्रमस्तेन तुल्यं तृभृवृइत्यादौ ण्यन्त दमेर्ग्रहणं अरिन्दमइत्युदाहरणे कर्म्मोपपदेन सूचितं केचित्तस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्म्मकत्वमिति केचित् सकर्म्मकोऽपि दमिरिष्यतइति गोयीचन्द्रेणोक्ता दमिता परिसंधातानिति निदर्शितं विश्वं विभर्त्तीति विश्वम्भरा पृथ्वी पूर्व्ववत् खः तस्या अधिपं स्वामिनं अधिपातीत्यधिपः इनजनादिति डः॥१०७॥

वसुन्धरायां कृत्स्नायां नास्ति वालिसमोबली। हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवं॥१०८॥

इति खजधिकारः॥

वस्वित्यादि। वसुन्धरायां पूर्व्ववत् खच् वालिना समोऽन्योबली बलयुक्तोनास्तीति हृदयङ्गमं मम स्वानुभवं ब्रवीमि मम स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकारात् गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि॥१०८॥

वलित्यादि। कृत्स्नायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्योबलवान् नास्ति वसु धरतीति तृभृवृहृत्यादिना खः एतत्तु हृदयङ्गमं आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्ववत् खः अनुभूतस्येयं संज्ञा न पुनस्त्वां पराभवं न ब्रवीमि तस्माद्भवतः पराभवं न त्वां वदामि तेन नास्ति वालिसमोबलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ज्ञापितं। इति खप्रधिकारः॥१०८॥

दूरगैरन्तगैर्बाणैर्भवानत्यन्तगः श्रियः। अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः॥१०९॥

एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि। यतोभवान् क्रुद्धःसन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्योल्युः बाणैः करणभूतैः दूरगैः दूरं गच्छन्तीति अन्तगैः कार्य्य समापकैः अन्तात्यन्तेत्यादिना डः श्रियोलक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति किं पुनर्वालिनोलक्ष्म्या अत्यन्तगोभवान्विनाशयितेति॥१०९॥

दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियोलक्ष्म्याबाणैरन्तगोभवेत् किं पुनर्वालिनः श्रियः सुतरामेतल्लक्ष्म्यानाशयिता स्यात् बाणैः कीदृशैः दूरगैर्दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छतीति इनजनाद्गमादेर्डः दितिगर्भं संक्रन्दितवान् इति नन्द्यादित्वादनः॥१०९॥

वरेण तु मुनेर्व्वाली सञ्जातो दस्युहा रणे। अवार्य्यप्रसरः प्रातरुद्यन्निव तमोपहः॥ ११०॥

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् बध्यादिति आशिषि हनइति डः अतोरणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः कइव तमोपहइव तमोपहः आदित्यः तमोऽपहन्तीति अपक्लेशतमसोरिति डः प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्व्वादिणः शतरि इणो यण् अवार्य्यप्रसरस्तदृशावपि सर्व्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्व्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं नतु प्रातरेवोद्यन्नवार्य्यप्रसरइति ॥ ११०॥

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि वालिविक्रममाह मुनेर्व्वरेण तु दस्युहः सवाली रणेऽवार्य्यप्रसरः संजातः काले उद्यन् तमोपहः सूर्य्यइव दस्यून् शत्रून् हन्तीति हनअनाशिषि इति डः हन्तेराशिषि डइति परे तन्मते वाली दस्यून् बध्यादिति मुनेर्व्वरेण अवार्य्यप्रसरोजातः स्वमते आशीरर्थानुक्तौ न क्षतिः वरेण दस्युहन्तृत्वे आशीर्गम्यतएव अवार्य्योऽखण्डनीयः प्रसरो गतिर्यस्य सतथा सृगतौ अनि रूपं उत्पूर्व्वस्येणः शतरि उद्यन् तमोऽपहन्तीति पूर्व्ववत् डः तमःक्लेशार्थेभ्योऽपपूर्व्वहन्तेर्डइति परः॥ ११०॥

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते । चेतो वालिबधं राम क्लेशापहमुपस्थितं ॥ १११ ॥

इति डाधिकारः ॥

अतीत्यादि । हे राम मदीयं चेतोवालिबधं कर्म्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात् कातरं व्याकुलं वालिनोऽतिबलयुक्तत्वात् कीदृशं बधं क्लेशापहं दुःखोन्मूलकं पूर्व्ववड्डः अतिप्रियत्वाद्वालिबधस्य यस्य हि यत्प्रियं तत्सिद्धमपि असौ न प्रत्येति ॥ १११ ॥

अतीत्यादि । हे राम वालिबधस्यातिप्रियत्वात् मे मम चेतो वालिबधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं वालिभयाद्व्याकुलं उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः वालिबधं कीदृशं क्लेशापहं दुःखोन्मूलकं अतएवास्यातिप्रियत्वं क्लेशमपहन्तीति पूर्व्ववत् डः ॥ १११ ॥

शीर्षघातिनमायातमरीणां त्वां विलोकयन् । पतिघ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियं ॥ ११२ ॥

उपस्थितोऽस्य बधइति कथं ज्ञायतइत्याह शीर्षेत्यादि । अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः आयान्तं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः अमनुष्यकर्तृकेचेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वं ॥ ११२ ॥

शीर्षेत्यादि। वालिवधस्योपस्थितत्वं दर्शयन्नाह आगतं त्वां विलोकयन्नहं वालिनः स्त्रियं पतिघ्नलक्षणोपेतां मन्ये स्त्रिया वालिपत्नीत्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् वालिवधो गम्यते पतिं हन्तीति हमचरगष्टक् हनगमित्युङ्लोपः हनोघ्नो घ्नः अमनुष्यकर्तृकाद्धन्तेष्टगिति परः त्वां किम्भूतं अरीणां शीर्षघातिनं शिरश्छेदिनं घहादित्वाणिन् कुमारशीर्षाभ्यां हन्तेर्णिन्निति परः उत्प्रेक्षाव्यञ्जकोऽत्र मन्येशब्दः अन्यथास्थितस्यान्यथा कथनात्॥ ११२॥

शत्रुघ्नान्युधि हस्तिघ्नो गिरीन् क्षिप्यन्नकृत्रिमान्। शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान्॥ ११३॥

शत्रुघ्नानित्यादि। किञ्च युधि संग्रामे वाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा तां च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः क्षय्यजय्यौ शक्यार्थ इत्ययादेशनिपातनं कीदृशः अभ्युपायवान् युद्धोपाययुक्तः किं कुर्व्वन् क्रुद्धः क्षिप्यन् गिरीन् दिवादित्वाच्छ्यन् अकृत्रिमान् दैवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति अमनुष्येति टक् हस्तिघ्न इव हस्तिघ्नः हन्तुं शक्तः शक्तौ हस्तिकपाटयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् वाली चामनुष्यः शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिप्यन् सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया पाणिघैः पाणिवादकैः ते हि हस्तियुद्धेऽन्यस्य वाद्यस्यासम्भवात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिपन्ति पाणिघताडघौ शिल्पिनीति कर्त्तरि निपातनं ॥ ११३॥

अचुघ्नानित्यादि। अत्यथजनककर्म्मदारा रामविक्रमं भ्रातु मित्त्वन् मद्दयामयतः साक्षात् स्वाभिप्रायकथनायुक्तत्वात् छलेन रामं स्तुवन्नेवाह ईदृशोऽपि वाली त्वया जय्यः जेतुं शक्यः पक्षा वयेत्यादिना निपातः कीदृशः अभ्युपायवान् युद्धोपाययुक्तः क्रुध्यन् सन् गिरीन् क्षिपन् दिवौकसां मुदि कीदृशान् अकृत्रिमान् देवनिर्म्मितान् एतेन स्वभावसिद्धमुष्कृतत्वं सूचितं अचुघ्नान् क्षिप्य माणागिरयः अचुं घ्नन्ति अचुं हन्तुं गिरीन् क्षिपतीति भावः पति घ्नवत् टक् पुनः कीदृशः हस्तिघ्नः हस्तिनं हन्तीति पूर्व्ववत् टक् हस्तिकपाटाभ्यां हन्तेः शक्तौ टगिति परः तेन हस्तिनं हन्तुं शक्त इत्यर्थः स्वमते अर्थादेव शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरै रुपलक्षितः पाणिघैः पाणिवादकैः युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभिः सह गिरीन् क्षिपन् इति वा सम्बन्धः एतेन तत्सदृशास्तत्सहाया अपि सन्तीति सूचितं पाणिभ्यां पाणौ हन्तीति पाणिघेति निपातनात् ॥ ११३ ॥

आढ्यङ्करणविक्रान्तोमहिषस्य सुरद्विषः। प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् वधं ॥ ११४ ॥

आढ्य। अनाढ्यमाढ्यं करोत्यनेनेति आढ्यसुभगेत्यादिना करणे ख्युन् आढ्यङ्करणं विक्रान्तं यस्य वालिनः अनाढ्यः सन् विक्रान्तेनाढ्योभूत इत्यर्थः महिषस्य सुरद्विषोदुन्दुभेर्वधं मरणं यः कृतवान् दुष्करं कष्टसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरं अप्रियं प्रियङ्करोत्यनेनेति पूर्व्ववत् ख्युन् ॥ ११४ ॥

आढ्यमित्यादि। किञ्च वाली युधि महिषस्य दैत्यस्य वीर्यं कृतवान् कीदृशः अनाढ्यमाढ्यः क्रियते येन तादृशं विक्रमं विक्रमो यस्य सतथा अनाढ्यः सन्नपि विक्रमेणाढ्योऽभूतदित्यर्थः नञ्च पलितेत्यादिना खनट् यद्धं कीदृशं इन्द्रस्य प्रियङ्करणं प्रीङ्प्रीतौ इगुपधात्प्रीति कप्रत्यये प्रियः प्रीतिमान् महिषभयेन प्रागप्रियः प्रियः क्रियते अनेनेति पूर्ब्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा इन्द्रोलोकानामप्रियआसीत् असुरवधाक्षमत्वात् पुनःकृतस्नुव येन तु प्रियः क्रियतइत्यर्थः यतो दुष्करं कृच्छ्रसाध्यं एतेन इन्द्रा दप्यधिकोऽयं बलीति सूचितं॥ ११४॥

प्रियम्भावुकतां यातस्त्वं चिपन् योजनं स्मृतं। स्वर्गे प्रियम्भविष्णुश्च कृत्स्नं शक्तोऽप्यबाधयन्॥ ११५॥

प्रियमित्यादि। तमेवं सुरद्विषं स्मृतं पादाङ्गुष्ठेन योजनमध्वानं चिपन् चिपेस्तौदादिकस्योभयपदिनोरूपं प्रियम्भावुकतां यातस्त्व या स्वर्गे प्रियंभविष्णुरासीत् कर्त्तरिभुवइत्यनेनाढ्यादिषूपपदेषु ख्रिष्णुच्युकञौ॰ शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् अबा धयन् अपीडयन् बधसंयमनइति चौरादिकः तस्य शतरि रूपं सईदृशस्त्वया शक्योजेतुं यदि लदस्त्वाणां सामर्थ्यं दृष्टमित्यभिप्रा येणाब्रवीत् सुग्रीवः॥ ११५॥

प्रियमित्यादि। तं स्मृतं महिषं पदाङ्गुष्ठेन योजनं अध्वानं चिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् यस्याप्रियआसीत् दुष्टत्वात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि

कस्यां लोकं प्रवाधयन् अपीडयन् स्वर्गस्य मियमासीत् तथापि मित्रोभूतः भुवे येष्विष्णुस्तुकआविति चार्थे विष्णुस्तुकौ यथक् वध्ये क्रियाधुरादिः धीजनशब्देनाच धीजनात्परितदेशोवद्य नै यहाध्यादिव्याप्ताविति धीजनात् द्वितीया एवं सुग्रीवः प्राप्त वीद्रामसिति प्रागुक्तेन सम्बन्धः ॥ ११५ ॥

जिज्ञासोः शक्तिमस्त्राणां रामोन्यूनधियः कपेः।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११६ ॥

रामोऽपि तदभिप्रायं विदन् यत्कृतवान् तदाह। जिज्ञासोरित्यादि। अस्त्राणां शराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशो ऽनुदके क्विन् ॥ ११६ ॥

जिज्ञासोरित्यादि। यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा त्वया शाहशोवाली जेतुं शक्यतइति सम्भाव्यतइति सुग्रीवाभिप्रायं रामोऽपि ज्ञातवान् यतोन्यूनबुद्धेरतएवास्त्राणां शक्तिं ज्ञातुमिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्ण्यौ रुधादित्वात् श्नम् व्योमस्पृशः अत्युच्छ्रितानित्यर्थः व्योम स्पृशन्तीति स्पृशेरिति क्विप् उदकवर्ज्जमुपपदात् स्पृशः क्विनिति परः ॥ ११६ ॥

ततो वालिपथौ वध्ये रामर्त्विग्जितसाध्वसः। अभ्य भून्निलयं भ्रातुः सुग्रीवोभिनदन् दधृक्॥ ११७॥

तत इत्यादि। ततस्तद्भेदादनन्तरं सुग्रीवो भ्रातुर्निलयम भ्यभूत् अभिभूतवान् कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपा तितं धृषेः क्विन् द्विर्व्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं षकारः वर्ग्ग ककारः यस्माद्वालिनि पशाविव वध्ये वधार्हे रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद्धृक् ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तो वा यजतीति ऋतुपूर्व्वाद्यजेः क्विन् यजा दित्वात्सम्प्रसारणम् इदन्तनिकृत्यन्तनिर्व्वचनं रूढितस्तु याजकेष्व ष्टु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् किलकिलाशब्दं कुर्व्वन् ॥ ११७ ॥

तत इत्यादि। तत्पश्चादनन्तरं सुग्रीवोनिनदन् शब्दं कुर्व्वन् भ्रातुर्व्वालिनो निलयं निवासं अभ्यभूत् अभिभूतवान् भूधातोरपि वेति सेर्लुक् वालिनि पशाविव वध्ये सति रामेणैव ऋत्विजा याज केन जितमपनीतं साध्वसं भयं यस्य येन वा सतथा अतएव द धृक् धृष्टः ऋतौ यजतीति चास्मिन्निति क्विप् यजस्वपाद्योरिति जिः ऋक्विति कङ् धृषप्रागल्भ्ये क्विपि दधृक् इदमनुध्वागित्यादिना निपातः ऋत्विजा पशुरपि हन्यत इति भावः॥ ११७॥

गुहायानिरगाद्वाली सिंहोमृगमिव ब्रुवन्। भ्रा तरं युद्धियः संख्ये घोषेणापूरयन्दिशः॥ ११८॥

गुहायादित्यादि। तस्य शब्दमाकर्ण्य गुहायानिरगाद्वाली निर्गतः इणोगा लुङि गातिस्थेति सिचोलुक् भ्रातरं युवन् अभिगच्छन् युअभिगमने अस्यादादिकस्य वर्त्तमानसामीप्ये लटः शतरि उवङादेशे रूपं संख्ये युद्धे भियोयुङ् भीतेर्योक्ता कर्म्मणि इत् भीतिं युञ्जन्नित्यर्थः युजेः पूर्व्ववत् क्विन् युजेरसमासइति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहोमृगमिव युवन् घोषेण दिशआपूरयन् दिशन्ति ताइति दिशः पूर्व्ववत् क्विन्॥११८॥

गुहेत्यादि। सुग्रीवस्य शब्दं श्रुत्वा वाली गुहायाः सकाशात् निरगात् निर्गतः इणोगाङ्लुङि भ्रुवापिवदेणइति सेर्लुक् सिंहो यथा मृगं यौति तद्वत् भ्रातरं युवन् अभिमुखेन गच्छन् युअभिसर्पणे भविष्यत्सामीप्ये क्वौ अभिधानात् संख्ये युद्धे भियोयुङ् भयस्य प्रयोक्ता भयप्रदइत्यर्थः युजेः क्विप् युजिरोऽसमासनघाविति नुम् ङित्यादौ युजेःपृथक्ग्रहणात् प्राक्षङ् क्नोर्नुः ङपेन्नम् नोरिति ङः स्यान्तस्य लुप् घोषेण शब्देन दिशआपूरयन् दिशतीति दिक् चासुविति क्विप्॥११८॥

व्यायच्छमानयोर्मूढोभेदे सदृशयोस्तयोः। वाणमुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः॥११९॥

व्यायच्छेत्यादि। तयोर्व्वालिसुग्रीवयोर्व्यायच्छमानयोः कलहायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढोभ्रान्तः सन्

इक्ष्वाकुकुलनन्दनो रामो वाणमुद्यतं सज्जीकृतमायंसीत् उपसंहृतवान् समदाङ्ध्यो यमो ग्रन्थ इति तङ् न भवति अकर्त्रभिप्रायत्वात् तत्र कर्त्रभिप्राय इति वर्त्तते आङो यम हन इत्यनेनापि न स्यात् सकर्म्मकत्वात् तत्राकर्म्मकादिति वर्त्तते समानपूर्व्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् दृक्दृश वतुष्विति समानस्य सभावः ॥ ११८ ॥

व्यायेत्यादि। इक्ष्वाकुकुलनन्दनो रामस्तयोर्वालिसुग्रीवयोर्भेदे विवेचने मूढः भ्रान्तः सन् वालिवधायोद्यतं कृतसन्धानमपि वाणं सुग्रीववधशङ्कया आयंसीत् संहृतवान् यमरमणमात इति इमृसनौ कीदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्यमानयोर्व्वा आङ्माङ्ग्रहादृढा चाहनयम इति न मं सदृशयोराकृत्या अन्योन्यं तुल्ययो' मूढत्वे हेतुरयं समानोदृश्यत इति त्यदादिना टक् समानेदं किमद इति समानस्य सादेशः॥११९ ॥

ऋष्यमूकमगात् क्रान्तः कपिर्मृगसदृग्द्रुतं। किष्किन्ध्याद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन् ॥१२० ॥

ऋष्यमूकमित्यादि। कपिः सुग्रीवः किष्किन्ध्याद्रिसदा वालिना किं किं दधातीति किष्किन्धा गुहा आतो ऽनुपसर्गेकः पारस्करादिदर्शनात् पूर्व्वस्य सुडागमो मलोपः षत्वञ्च निपात्यते तदुपलक्षितोऽद्रिः किष्किन्ध्याद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टत्वात् क्रान्तः सन् ऋष्यमूकं द्रुतमगात् समानो सपदात् दृशेः पूर्व्ववत्क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्ण इति चकारात् कोः कादेशः ॥ १२० ॥

ऋश्येत्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना अत्यर्थं निष्पिष्टः पीडितः अतएव क्लान्तः सन् कोष्णं ईषदुष्णं उच्चकृत्सन् द्रुतं शीघ्रं ऋश्यमूकं अगात् गतवान् मृगसदृक् पलायने द्रुतगमनात् मृगतुल्यः किपि सदृक् सदृशवत् किष्किभिर्ध्वानरोभिरिष्यत इति इन्धेर्यन्तात् पञ्चलमटइति अल् निपातनात् किष्किः किष्कादेशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धामूर्द्धन्यषकारवती षकारोपधापि किष्किन्ध्येति श्रीपतिः किष्किन्धा गुहा तदुपलक्षितोऽद्रिस्तच सीदतीति चासुषिति क्विप्॥१२०॥

ज्ञात्वा वालिद्रुहं रामो मालया सविशेषणं। अङ्गदस्वं पुनर्हन्तुं कपिनाज्ञाययद्रणे॥१२१॥

ज्ञात्वेत्यादि। वालिद्रुहं सुग्रीवं वालिनं द्रुह्यतीति सत्सित्यादिना क्विप् मालया सविशेषणं सचिह्नं ज्ञात्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनं अङ्गदं सूतइति पूर्व्ववत्क्विन् श्रोस्तुपोतिः यणादेशः तं रणे हन्तुं कपिना सुग्रीवेणाज्ञाययत् अभिभवं कारितवान् ज्ञपतेर्हेतुमण्णिचि अर्त्तीत्यादिना पुक्॥१२१॥

ज्ञात्वेत्यादि। वालिद्रुहं सुग्रीवं वालिभेदज्ञानाय मालया सविशेषणं सचिह्नं ज्ञात्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराज्ञापयत् आज्ञानमकारयत् योऽज्ञौमेरित्यादौ अखादनीक्रन्दाशब्दायक्रादिति वर्ज्जनात् ण्यन्तस्य कर्त्तुः कपेर्न कर्म्मत्वं ज्ञाज्ञाज्ञीत्यादिना यत् अङ्गदं सूते जनयतीति चासुषित्यादिना क्विप् कथाद्यमेकाचइति वत्वं वालिने द्रुह्यतीति पूर्व्ववत् क्विप्॥१२१॥

तयोर्व्वानरसेनान्योः संप्रहारे तनुच्छिदं। वालि
नोदूरभाग्रामोवाणं प्राणादमत्यजत् ॥ १२२ ॥

तयोरित्यादि। वानरसेनान्योः वानरस्वामिनोः एकवेकाच इति यण् संप्रहारे युद्धे प्रवृत्ते रामोवाणमत्यजत् वालिनस्तनुच्छिदं तनुं शरीरं छिनत्तीति पूर्व्ववत् क्विप् ह्रस्वेति तुक् प्राणादं प्राणापहारिणं प्राणानत्तीति प्राणादं अदोनन्ने इति विट् दूरभाक् दूरमवस्थितोरामोदूरं भजतइति भजोण्विः ॥ १२२ ॥

तयोरित्यादि। तयोर्व्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितोरामोवालिनस्तनुच्छिदं अतएव प्राणादं प्राणभक्षकं वाणं अत्यजत् क्षिप्तवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च चासुविति क्वप् अत्तेरनन्नत्वात् क्विविति परः दूरं भजतइति ढाङ्गजसहवहोविण् ॥ १२२ ॥

वालिनं पतितं दृष्ट्वा वानरारिपुघातिनं। वान्ध
वाक्रोशिनोभेजुरनाथाः ककुभोदश ॥ १२३ ॥

वालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्यजातौ णिनिः तं वालिनं पतितं दृष्ट्वा वानरादश ककुभोदश दिशोभेजुः अनाथाः सन्तः स्वामिनोहतत्वात् वान्धवक्रोशिनोवान्धवाइव क्रोशन्तीति कर्त्तर्य्युपमानइति णिनिः ॥ १२३ ॥

वालिनमित्यादि। वालिनं पतितं दृष्ट्वा वानरादश ककुभो दिशोभेजुः पलायिताइत्यर्थः रिपुघातिनं रिपुं हन्तीति ग्रहादि

त्वाचिन् वान्धवाक्रोशिनः वान्धववत् आक्रोशन्तः क्रन्दन्तः कर्त्त र्य्युपमाने णिनिरिति परः खमते ग्रहादित्वाणिन् इवार्थस्य गम्य मानत्वं अनाथाः वालिनाशेन स्वामिरहिताः ॥ १२३ ॥

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिनः। उपेयु र्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः ॥ १२४ ।

धिग्दाशरथिमित्यादि । येषां सत्यन्यस्थाने वृत्तौ च वनएव वर्त्तितुं आत्मनोनियमः ते धनवर्त्तिनोमुनयः व्रतइति णिनिः धिगिमं दाशरथिमित्यूचुः उक्तवन्तः येनानपराधेऽपि वालिनो ह्ययं हतमिति कपिस्त्रियश्च वालिनमुपेयुः मधुपायिन्यः आभी क्ष्ण्येन मधु पिवन्त्यः वहुलमाभीक्ष्ण्येइति णिनिः क्रोशन्त्योहा नाथेति रुदन्त्यः ॥ १२४ ॥

धिगित्यादि । दाशरथिं रामं धिगिति वनवर्त्तिनो मुनयऊचुः महतामन्यायकरणातित्वानौचित्यात् धिक्समयेत्यादिना दाश रथेर्द्वितीया वने वर्त्तन्तइति ग्रहादित्वात् णिन् कपिस्त्रियः क्रोश न्त्यो हा नाथेति क्रन्दन्त्यस्तं वालिनं उपेयुरुपगताः उपपूर्व्वस्येण ञ्चाउसि रूपं मधुपायिन्यः मधूनि पीतवत्यः ग्रहादित्वात् णिन् यद्युत्कृदिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुनःपुनर्म्मधु पिवन्ति स्मेत्यर्थः आभीक्ष्ण्यार्थस्य णिनोक्तत्वात् न द्वित्वं स्वमतेऽप्य भिधानादेव ॥ १२४ ॥

राममुच्चैरुपालभ्य भूरमानी कपिप्रभुः। प्राणवेदन या ग्लायन् साधुम्मन्यमसाधुवत् ॥ १२५ ॥